1212

...के बारे में
... हुआ एक

... करने के
...च्छा को
...काम किया
...घट चलते
... परिणाम

... अपेक्षा के
...ा जमुना
'जादूगर'
... करते रहे
... हुई तो वो
... से बाक्स

... का सामना



क्या कहा ?

पी.उपेन्द्र ने क्या तर्क दिये, रक्षामंत्री पन्त ने क्या दलील दी एन.राम और चित्रा सुब्रमणियम ने 'हिन्दू' में क्या लिखा, ठक्कर रिपोर्ट का क्या हुआ संसद में क्या स्पष्टीकरण दिये गये, फेयर फैक्स का कार्य कैसा रहा आदि- आदि। अमिताभ कहते हैं कि जब मैंने इस मामले में कुछ किया ही नहीं तो अपनी निर्दोषिता साबित करने के लिए क्या कोशिश करूं। अमिताभ के अनुसार वी.पी.सिंह की सरकार उनको परेशान करने के लिए उनकी आयकर संबंधी फाइलें टटोल रही है उन्होंने पिछले दिनों दूरदर्शन पर

...निया म...
...रीन ड्रा...
...र बिता...
...कारण त...
...अंदर से...
...बाट जो...
मन में ...
अरे ये ...
साक्षात्...
नेताओं...
तक के...

# निबन्धमञ्जूषा

[बालावबोधाय]




डॉ० कृष्णलालः
आचार्यः, संस्कृतविभागे, दिल्लीविश्वविद्यालये दिल्लीस्थे ।

प्रकाशकम्
विभुवैभवम्
विश्वनीड, ई/१३७, सरस्वती विहार, दिल्ली-११००३४

प्रकाशक :
विभुवैभवम्
विश्वनीड, ई/६३७,
सरस्वती विहार, दिल्ली-११००३४



प्रथमसंस्करणम् : संवत् २०३५ (१९७९)
द्वितीयसंस्करणम् : संवत् २०४२ (१९८५)

मूल्यम् : पञ्च रूप्यकाणि (५·००)

मुद्रक :
दुर्गा मुद्रणालय,
सुभाषपार्क एक्सटेंशन, शाहदरा दिल्ली-११००३२




# प्राक्कथन

प्रस्तुत पुस्तक 'निबन्धमंजूषा' बालकों को संस्कृत-निबन्ध-शैली का दिग्दर्शन कराने के उद्देश्य से लिखी गई है। निबन्धों के विषयों की कोई सीमा नहीं है। न ही कोई सभी विषयों पर निबन्ध स्मरण करके परीक्षा में उनका प्रयोग कर सकता है। वस्तुतः निबन्धलेखन एक अभ्यास है, प्रशिक्षण है—जिसके द्वारा व्यक्ति किसी विषय पर विचारों को सुसम्बद्ध एवं व्यवस्थित करके परिमार्जित भाषा में अभिव्यक्त करना सीखता है। इस लघु-पुस्तक का भी यही उद्देश्य है। इसमें प्रायः ऋतुओं, उत्सवों, संस्कृति, विज्ञान, महापुरुषों आदि विविध विचारपरक, साहित्यपरक, वर्णनात्मक, सामाजिक विषयों पर कुछ मौलिक लघु निबन्ध रखे गये हैं। सुबोधता को ध्यान में रखकर और छात्रों को भाषा से अवगत कराने के उद्देश्य से सर्वत्र दृढ़तापूर्वक सन्धि का प्रयोग नहीं किया गया। भाषा में दुरूह प्रयोगों का भी यथासम्भव परिहार तो किया गया है परन्तु यह भी ध्यान रखा गया है कि बालक के परिष्कृत तथा अलंकृत भाषा-प्रयोगों के ज्ञान का विस्तार हो।

यह आशा की जाती है कि छात्र इन निबन्धों का अध्ययन करके स्वयं इन्हें, इनसे मिलते-जुलते या अन्य निबन्धों को लिखने का प्रयास करेंगे और अपनी भाषागत एवं विषयगत क्षमता का विस्तार करेंगे। संस्कृत-भाषा-सम्बन्धी दो छोटे से मौलिक नियमों की ओर संकेत करना अच्छा होगा। एक तो यह कि विशेषण-विशेष्य के लिंग, वचन, विभक्ति सदा

समान होने चाहियें। दूसरे कर्ता और क्रिया के पुरुष और वचन में भी समानता आवश्यक है। शब्दों के लिंगों तथा विभक्तियों के प्रयोग का ध्यान भी रखा जाना चाहिए।

अल्प-बहुत सी पुस्तक होते हुए भी मैं अपनी विशेष दृष्टि से बालकों के लिए भी कुछ प्रस्तुत करना चाहता था। इसलिए यह लघु-पुस्तिका बनाई गई है। इन निबन्धों के द्वारा बालकों की भाषा-शैली बने, उन्हें संस्कृतलेखन का अभ्यास हो और वे अपनी संस्कृत में विचाराभिव्यक्ति कर सकें—यही इस पुस्तक का लक्ष्य है। यदि इस लक्ष्य में सफलता मिलती है तो इसी में लेखक की कृतकृत्यता है।

—कृष्ण लाल



# निबन्ध-सूची

१

# संस्कृतभाषाया महत्त्वम्

संस्कृतम् भारतस्य विश्वस्य च पुरातनतमा भाषा। अन्यासां भाषाणां तथा पुरातनं साहित्यमद्य नोपलभ्यते यथा पुरातनं संस्कृतसाहित्यम्। विश्वस्य पुरातनतमो ग्रन्थः ऋग्वेदः संस्कृतभाषयैव निबद्धः। इयमतीव वैज्ञानिकी भाषा, अस्या पाणिनिमुनिप्रणीतं व्याकरणमतीव वैज्ञानिकं यस्य साहाय्येन अद्यापि वयं तान् पुरातनग्रन्थान् अवबोद्धुं शक्नुमः।

संस्कृतमेव हि भारतम्। यदि वयं प्राचीनं भारतमर्वाचीनं वापि भारतं ज्ञातुमिच्छामः तर्हि नास्ति संस्कृतसमोऽन्य उपायः। भारतीयजनस्य अद्यापि यत् चिन्तनं तस्य मूलं प्राचीनसंस्कृत-वाङ्मये दृश्यते। यदि च तत् चिन्तनं वयं नूतनविज्ञानाभिमुखं कर्तुमिच्छामस्तर्हि तस्य मूलं पृष्ठभूमिं च अविज्ञाय विच्छिन्न-रूपेण कर्तुं न शक्नुमः। यदि वयमिच्छामो यत् भारतीयजनः परिवर्तनम् आत्मसात् कुर्यात् तदा तेन परिवर्तनेन आत्मरूपेण संस्कृतिमयेन संस्कृतमयेन च भाव्यम्।

संस्कृतस्य शब्दाः सर्वासु भारतीयभाषासु कासुचित् वैदेशिक-भाषासु च प्रयुज्यन्ते। अतः यदि वयं भारतीयजनानामेकीभावं,

तेषां भाषागतम् अभेदं सौमनस्यं च इच्छामः तदा संस्कृतज्ञानेनैव तत् सम्भाव्यते । संस्कृतं सर्वाः भारतीयभाषाः सर्वं जनमानसं च एकसूत्रेण संयोजयति । प्राचीनभारतीयेतिहासस्य भूगोलस्य च समीचीनं चित्रं संस्कृताध्ययनं विना असम्भवम् ।

संस्कृतसाहित्यम् अति समृद्धं विविधज्ञानमयं च वर्तते । अत्र वैदिकं ज्ञानमुपलभ्यते, यस्य क्वचिदपि साम्यं नास्ति । महाभारतं तु विश्वकोशरूपमस्ति । रामायणशिक्षाः दिशि दिशि प्रचरिताः । उपनिषद्भिर्वैदेशिकैरपि विद्वद्भिः शान्तिः प्राप्ता । कालिदासादीनां काव्यानाम् उत्कर्षस्य तु कथैव का । चरक-सुश्रुतयोरायुर्वेदः, भारद्वाजस्य विमानशास्त्रम्, कणादस्य परमाणु-विज्ञानम्, गौतमस्य तर्कविद्या, शुल्बसूत्राणां ज्यामितिविज्ञानम्, आर्यभटस्य खगोलशास्त्रम् इत्येवमादीनि अनेकानि विज्ञानानि शास्त्राणि च संस्कृतभाषोपनिबद्धान्येव । अद्यापि राजनीति-विषये शासनतन्त्रविषये च कौटिल्यस्य अर्थशास्त्रं मनुस्मृतिश्च मार्गप्रदर्शके स्तः ।

वयं भारतीयाः । अस्माभिः स्वकीयं गौरवमयं वाङ्मयमधीत्यैव तदाधारे भविष्यनिर्माणं कर्तव्यं, तदैवात्मोत्कर्षः सम्भाव्यते । स च उत्कर्षः आत्माधिष्ठितो हृदयग्राही वास्तविकोन्नतिकारी भविष्यति । यानि राष्ट्राणि स्वगौरवं न विस्मरन्ति तान्येव सफलतायाश्चरमोत्कर्षं प्राप्नुवन्ति ।

२

# भारतीयसंस्कृतिः

कस्यापि राष्ट्रस्य जनानां यः साधारणतया परिष्कृतो विशुद्ध उत्तम आचारो व्यवहारश्च भवति स एव तस्य राष्ट्रस्य संस्कृतिरुच्यते। भारतीयसंस्कृतेरिदं वैशिष्ट्यं यत् प्राचीनकालादेव या संस्कृतिरत्र पल्लविता सैवाधुनापि अक्षुण्णाऽत्र दृश्यते। अस्ति अस्यां संस्कृतौ किञ्चिदेवंविधं यद् उत्कृष्टतमं यच्च न कदापि क्षयि। अस्याः संस्कृतेः उदात्तत्वदर्शनं न केवलं संस्कृतसाहित्ये एव भवति, अपितु ग्रामे ग्रामे नगरे नगरे लोकजीवने च भवति। अहिंसासत्यास्तेयादिधर्मास्तादृशा एव। समन्वयो हि भारतीयसंस्कृतेर्मूलतत्त्वम्। अस्मादेव कारणादत्र बह्व्यो वैदेशिक्यः संस्कृतयः समायाताः परन्तु ताः सर्वा एव भारतस्य संस्कृतौ विलीनाः। भारतीयधार्मिककृत्यानां भारतीयपूजाविधीनां च तादृशमस्ति स्वरूपं यत्तत्र प्राचीनार्वाचीनयोः पौरस्त्यपाश्चात्ययोश्च ससुखं सम्मेलनं सम्भाव्यते। भारतस्य विविधेषु प्रदेशेषु विविधा जनाः विविधवेषधारिणो विविधभाषाभाषिणोऽपि विविधदेवान् पूजयन्तोऽपि हृदये समाना एव। सर्वं एव एकमेव परमेश्वरं मन्यन्ते, सर्वेषु तीर्थेषु सर्वेषां समानादरो दृश्यते—

गङ्गा सर्वेषामेव पूज्यतमा, गां च सर्वं एव मातरं मन्यन्ते । सर्वत्र विवाहादिसंस्कारेषु त एव वैदिकमन्त्रा उच्चार्यन्ते । अमूर्तमनादिमनन्तं परमम् आत्मानं सर्वं एव जना विश्वस्य आधारभूतं मन्यन्ते । मद्यद्यूतादिव्यसनानि सकले भारते निन्द्यन्ते । कर्मफलानुसारेण पुनर्जन्मनि सर्वत्रैव विश्वासो दृश्यते ।

इयं समन्वयभावनैव सर्वत्र साहित्येऽपि दृग्गोचरीभवति । वेदेषु गीतायां च वयं ज्ञानकर्मोपासनासमुच्चयं पश्यामः । अस्या भावनाया आधारे एव अस्माकं महर्षिभिराचार्यैश्च पुरा समाजः चतुर्षु वर्णेषु कर्मानुसारं विभक्तः यतो हि समाजोत्थानाय सर्वेषां वर्णानां समन्वितः प्रयासोऽपेक्ष्यते । तथैव च पूर्णजीवनसाफल्याय मनुष्यजीवनं चतुर्षु ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाख्येषु आश्रमेषु विभक्तम् । एते चत्वारोऽपि आश्रमाः समन्वितरूपेणैव जीवनस्य पूर्णतां सम्पादयन्ति, न त्वेकैकशः । अयं समन्वय एव भारतीयसंस्कृतेः प्राणाः अनेनैव च सम्मिल्यास्माभिः स्वातन्त्र्यमधिगतम् । सर्वत्रैव भारते धार्मिकोत्सवेषु कृष्या सह सम्बन्धोऽन्यद् वैशिष्ट्यमस्याः संस्कृतेः । कृषिप्रधाना हीयं संस्कृतिः ग्रामप्रधाना च । अत एव वयं सरलजीवनम् अनुसरन्तोऽपि उत्कृष्टानादर्शान् रामकृष्णबुद्धादिमहापुरुषाणां धारयामः ।

## ३

# भारतवर्षम्

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः ।।

भारतवर्षम् अतीव प्राचीनदेशोऽस्ति । अस्य पुरातनं नाम आर्यावर्तः अस्ति । आकश्मीरात् कन्याकुमारीपर्यन्तम् आद्वारिकायाः कामरूपं यावत् च अस्य देशस्य विस्तारः । हिमालयस्य हिममण्डितानि शिखराण्यस्य देदीप्यमानानि मुकुटानीव विराजन्ते । रत्नाकरश्चास्य चरणान् प्रक्षालयतीव नित्यम् । सततप्रवहनशीलाभिर्गङ्गाप्रमुखाभिर्नदीभिः सिक्ता बद्रीनाथरामेश्वरादितीर्थालङ्कृता शस्यश्यामला इयं पुण्यभूमिः मोहयतीव मनांसि सर्वदा । मानवाय प्रदत्तः प्रकृत्या अयं सुरम्यः उपहारः । अस्मिन् भूभागे सर्वविधानि स्थानानि सर्वविधं च वातावरणमुपलभ्यते । यथात्र तुङ्गान्यभ्रंलिहानि गिरिश्रृङ्गाणि दृश्यन्ते तथैव गभीरसागरोऽस्य सीमानं प्रक्षालयति । यथात्र घोरवनानि तथैव गुल्मरहितानि नीरवाणि मरुस्थलानि दृश्यन्ते । यथा कठोरपाषाणमयी अधित्यका तथैव सुकोमला धान्यपूर्णा उपत्यकाऽवलोक्यते । सर्वविधाः पशुपक्षिणोऽत्रैकस्मिन्नेव देशे

समुपलभ्यते । अत एव आ प्राचीनकालादेव इयं भूमिर्वैदेशिकाक्रमणकारिणामाकर्षणकेन्द्रमभवत् । पूर्वमियं सुवर्णभूमिरुच्यतेस्म । आक्रामकैरस्मात् देशात् बहु धनमपहृतम् । परन्त्वपहृतेऽपि तस्मिन् भौतिके धने अक्षयं किञ्चिद् ज्ञानमयमाध्यात्मिकं धनमितोऽपहर्तुं न शशाक कश्चित् । ऋषीणामियं पुण्यभूमिः । अत्रैव अज्ञानासभ्यतान्धकारे निमग्नेषु अन्यदेशेषु ऋषिभिः सर्वप्रथमं वेदानां गहनज्ञानं प्रसारितम् । अत्रैव रामायण-महाभारतादिकाव्यानि गीतानि । अत्रैव सांख्ययोगन्याय-वेदान्तादीनां भगवद्गीतायाश्च गहनज्ञानप्रकाशेन सम्पूर्णभुवन-मालोकितम् । अत्रैव कालिदासप्रभृतीनां महाकवीनां रसार्द्र-सूक्तिभिः सहृदयहृदयान्यावर्जितानि ।

अद्यापि च स्वतन्त्रोऽयं देशः एकीभूतो विस्मृत्य सर्वान् भेदान् स्वजनानां बुद्धिवैभवेन शारीरिकबलेन च उन्नतये अग्रे सरति । अद्यापि निखिलं विश्वं भारतीयलोकतन्त्रेण मुग्धमिव विश्व-समस्यासमाधानाय भारताभिमुखं दत्तदृष्टि ।

अतएव पूर्वमेव भगवता मनुना सम्यगुद्घोषितम्—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।<br>
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

अस्यां पुण्यभूमौ एव देवा अपि जन्म ग्रहीतुं वाञ्छन्ति । अत एव इयं देवभूमिरपि कथ्यते । देवा अस्याः स्तुतौ गीतानि गायन्ति । इयमेव स्वर्गस्य मोक्षस्य च मार्गभूता । उक्तं च विष्णुपुराणे :—

गायन्ति देवाः किल गीतकानि<br>
धन्यास्तु ते भारतभूमिभागे ।

स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥

भारतभूमौ जन्मनो महत्त्वं महाभाग्यं च वर्णयता भागवतपुराणेनोच्यते—

अहो अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत, स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपथिकं स्पृहा हि नः ॥

४

# भारतीयं लोकतन्त्रम्

भारतं विश्वस्य महत्तमं लोकतन्त्रात्मकं राष्ट्रम् । अत्र हि लोकैर्निर्वाचितैर्जनैरेव सर्वं शासनं लोकहिताय सम्यक् प्रचाल्यते । वस्तुतः लोकतन्त्रमत्र भारतभूमौ भारतीयसंस्कृतौ च आप्राचीन-कालादेव बद्धमूलम् । अत्र गणानां गणपतेश्च विचारो वेदेषु दृश्यते । अत्र प्राचीनकालादेव एवंविधा व्यवस्था आसीत् यया राजनि गणपतौ वा मार्गभ्रष्टे जाते तस्य परिवर्तनाधिकारो जनानाम् पार्श्वे आसीत् ।

यद्यपि भारतीया जनता अशिक्षिता अविकसिता चास्ति तथापि देशस्य लोकसभानिर्वाचनेषु जनतया प्रदर्शितं यत् कोऽपि स्वेच्छाचारी लोकतन्त्रविरुद्धश्च जनः तत्सहायको वा शासना-धिकारं प्राप्तुं नार्हति । अनेन जनताया लोकतन्त्रे दृढो विश्वासः एव प्रकटीभवति ।

अस्मद्देशीयलोकतन्त्रानुसारेण धर्मजातिनिरपेक्षाः स्त्रियो वा पुरुषा वा समभावेन गुप्तमतदानपद्धत्या नेतृनिर्वाचने समर्थाः । ग्रामेष्वपि यत् स्थानीयशासनं पञ्चायतमाध्यमेन चलति तत्रापि जनहितकरा जनप्रिया वा नेतारः गुप्तमतदानपद्धत्यैव निर्वा-

च्यन्ते। सर्वस्मिन् देशे जनतया निर्वाचिता नेतार एव जनहित-कार्याणि विचारयन्ति सम्पादयन्ति च। न तत्र कश्चिदपि जन्म-जातो भेदः स्वीक्रियते, ये च जनाः आ शताब्दीभ्यो दलिताः केनापि कारणेन पृष्ठस्था वा आसन् तेषामर्थाय विशेषा उन्नतेरवसराः प्रदीयन्ते।

अस्माकं लोकतन्त्रे एतस्मिन् सर्वस्मिन् वर्तमानेऽपि महान् एको दोषो व्यवहारदृशा। यद्यपि संविधानानुसारेण सर्वाणि शासनकार्याणि राष्ट्रभाषयैव कर्तव्यानि, तथापि विशिष्टप्राव-धानं कृत्वा साम्प्रतमपि सर्वेषु शासनकार्येषु वैदेशिक्या आंग्ल-भाषायाः प्रयोगः क्रियते। अनेन सर्वं शासनकार्यं शासनकार्यसह-भागित्वं च सर्वजनसुलभं नास्ति। एतत् सर्वं वर्गविशेषस्य हस्ते एव सीमितं दृश्यते। तस्यैव अभिजातवर्गस्य सन्ततिः पौनः-पुन्येन महत्त्वपूर्णं शासनकार्यं सञ्चालयति स्वभाषां च जानन्तो ज्ञानिनोऽपि गर्ह्यन्ते, अवमान्यन्ते च। अपरं चास्माकं लोकतन्त्रे स्वसंस्कृतेः सर्वभाषाणां चाधारभूतस्य संस्कृतस्यापि गर्हणं न सुखावहम्। संस्कृतं विना देशस्य मूलभावना सांस्कृतिकैक्य-भावना विलुप्यते, तच्च भारतीयलोकतन्त्राय हानिकरमेव। अतः सम्यक् लोकतन्त्रं रक्षितुं स्वभाषाऽवश्यमेव रक्षणीया, प्रयोक्तव्या सम्माननीया च। लोकतन्त्रे विश्वविद्यालयेषु सर्व-विधं विधिप्रविधिविज्ञानादिज्ञानं स्वभाषयैव प्राप्तुम् सर्वेभ्यः अवसरो देयः।

५

# गंगा नदी

भारतवर्षस्य सर्वासां नदीनां गङ्गैव श्रेष्ठा पुण्यतमा, देवी च सा मन्यते। भागीरथी जाह्नवी चेत्यप्यस्या एव द्वे अपरे नाम्नी। कथम् इयं भागीरथी कथं चेयं जाह्नवीति विषये विभिन्नाः कथाः प्रचलिताः। एके वदन्ति यद्यदा त्रिशूलधरः त्रिनेत्रः तेजस्वी भगवान् शङ्करस्तपश्चचार तदा इयं गङ्गा नदी तस्य शिरसः उद्गता। अन्ये कथयन्ति यद् यदा गङ्गा स्वर्गात् पतिता तदा सा शिवस्य जटासु विलुप्ता, पश्चात् च शिवेन स्वयमेव तस्याः प्रवाहो मुक्तः। परमेतानि सर्वाण्याख्यानानि कल्पितानि। वस्तुतः हिमाच्छादितं हिमगिरिशिखरमेव शिव-शीर्षरूपेण कल्पितम्। इमाः पौराणिक्यः आख्यायिका भगवत-श्शिवस्य शक्तिमात्रमेव दर्शयन्ति। अथवा तैः आख्यानैस्तपसो महिमापि ज्ञायते यत्तपसा मनुजोऽप्राप्यम् अपि प्राप्तुम् शक्तः। तप एवास्मिन् विश्वस्मिन् विश्वे प्राणिनं निश्चिन्तं करोति। तपसो बलेन भगीरथः इमां नदीं स्वर्गात् पृथ्वीं प्रति मनुष्यहिताय आनयत्। अतः अस्या नाम भागीरथी इति प्रसिद्धम्।

किम् बहुना, इमानि सर्वाणि आख्यानानि त्यक्त्वास्मा-

भिर्भौगोलिकमेव सिद्धमस्याः नद्याः उत्पत्तिस्थानं मन्तव्यम्। हिमसुवर्णोत्तुङ्गशिखरे हिमालये मानसनामकात् सरोवरात् इयं नदी सवेगं निस्सरति। न केवलमियं वर्षासु एव वहति परं निखिलं वर्षपर्यन्तम् स्वनिर्मलेन स्रोतसा भारतधरणीं पुनाति। प्रथमं तु इयं भीषणवनसङ्कुले दुर्गमे पर्वतप्रदेशे निशायां चाहनि च निर्भया भूत्वा अरेरवस्थितायां चमौ विशालपराक्रमो धनुर्धारीव स्वपदध्वनिना सर्वमेव वातावरणं प्रतिरवसम्पूर्णं कुर्वन्ती कदाचित् शिलासु पतन्ती कदापि च वृक्षादीन् परिक्रामन्ती निश्चिन्ता भूतले लुठति। न जाने कदा प्रभृति अविरलम् एषा नदी स्ववक्षसि पत्राणि वहन्ती तरङ्गैः कूलानि च चुम्बन्ती महापर्वतादवतरति प्राणिनां प्राणरक्षां च करोति। अस्याः तटे एव हरिद्वारकाशीप्रयागसदृशानि पुण्यवन्ति महान्ति नगराणि स्थितानि। सर्वेषु धर्मकृत्येषु अस्या जलमेव पवित्रमिति शुभं मन्यते। मृत्यून्मुखस्य जनस्य मुखेऽपि गङ्गाजलमेव आसिच्यते। अस्या एव तटे पूतात्मनाम् ऋषीणामाश्रमाः आसन् यतः सर्वं ज्ञानं प्रसृतम्। अद्यापि गङ्गायाः शीतले जले स्नानं पुण्यजनकं मन्यते। विदेशेष्वपि भारतभक्ता जना गङ्गाजलम् अमृतमिव बहुमूल्यं मत्वा शिरसि धारयन्ति तच्च रक्षन्ति।

# ६

# वेदः

वेदः खलु मानवमात्रस्य प्राचीनतमः शब्दमयो ज्ञानराशिः। वेदशब्दस्य अर्थः ज्ञानमेव। वेदेषु मन्त्राः सन्ति। तेषु मन्त्रेषु आध्यात्मिकं तथा च जीवनस्य व्यावहारिकं ज्ञानं सम्मिलितम्। यदि वयं कस्यचित् जनस्य समाजस्य वा कर्तव्यविषये धर्मविषये वा किंचित् ज्ञातुमिच्छामस्तदा तत् सर्वं वेदेषु उपलभ्यते। अतएव भगवता मनुना मनुस्मृतौ साधूक्तं "वेदोऽखिलो धर्ममूलम्"।

वेदेषु प्राचीनतमं काव्यं दृश्यते। "अस्य विश्वस्य सृष्टिः कदा केन साधनेन केन वा पुरुषेण कृता" इत्यस्मिन् विषये वेदेषु विचारितम्। काः शक्तयः संसारे कथं कार्यं सम्पादयन्ति इति वेदयति वेदः। वेदेनोच्यते यत् सर्वमेतद् जगत् यज्ञमयं वर्तते। मनुष्यः मनसा कथं विचारयति, कथं परमेश्वरः सर्वेषां जीवानां सञ्चालनं करोति, कथं च सर्वज्ञः सः सर्वं जानाति इत्येतत् सर्वं वेदाः बोधयन्ति। राज्ञां व्यवहारविषये, अध्यापकानां महत्त्वविषये, व्यापारिणामाचरणविषये, सर्वेषां स्वास्थ्यविषये च महत् ज्ञानं वेदेषु लभ्यते।

वेदानुसारेण सर्वे जनाः परस्परं स्नेहभावेन मित्ररूपेण

वर्तन्ताम् — "सर्वा आशा मम मित्रं भवन्तु।" वेदाः मनुष्यं श्रेष्ठम् आर्यं सज्जनं वा कर्तुम् इच्छन्ति। अतएवोच्यते— "कृण्वन्तो विश्वमार्यम्"। मनुष्यः सत्यमेव मननशीलः परहित-चिन्तकः स्यात्, अतः तत्र कथ्यते—"मनुर्भव" इति। समाजे सर्वेषां गतिः वर्गभेदं विना समाना भवेत् येन राष्ट्रमुन्नतिं लभेत —"सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्"। वेदानामेव ज्ञानम् उपनिषत्सु, गीतायां, दर्शनग्रन्थेषु च विद्यते।

अस्माकं विवाहनामकरणचूडाकर्मादिषु संस्कारेषु समस्त-भारतवर्षे वेदमन्त्राणामेवोच्चारणं क्रियते। प्रत्येकं हिन्दूधर्मा-वलम्बिना बालेनापि वैदिको गायत्रीमन्त्रोऽवश्यमुच्चार्यते।

वेदाश्चत्वारः सन्ति—ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्व-वेदश्च। भारतीयपरम्परा वेदान् सृष्टेरादौ परमेश्वरेण ऋषीणां हृदयेषु प्रकटितान् मन्यते।

७

# रामायणम्

महर्षिवाल्मीकिना विरचितं रामायणं भारतस्य अतीव महत्त्वपूर्णो ग्रन्थः। रामायणम् आदिकाव्यं वाल्मीकिश्च आदि-कविः कथ्यते। अत्र दशरथात्मजस्य रामस्य कथा वर्णिता। रामोऽत्र मर्यादापुरुषोत्तमरूपेण चित्रितः। रामः सर्वगुणसम्पन्नः सर्वप्रियश्च आसीत्। तेन पृथिव्यामधर्मनाशो विहितः, धर्मश्च रक्षितः। दुष्टस्य सर्वदा नाशो भवति, सत्यं च जयति इति रामायणस्य सन्देशः। रामायणे वयमतीव मनोहरं काव्यं लभामहे। अत्र वन-नदी-पर्वत-सूर्योदय-चन्द्रोदय-षड्तु-समुद्रा-दीनां सुन्दरं प्राकृतिकं वर्णनं दृश्यते। सीतासौन्दर्यवर्णनं, तारा-सौन्दर्यवर्णनं, रामगुणसंकीर्तनं च चित्तावर्जकम् अस्ति। वाल्मीकिना अयोध्याकिष्किन्धालङ्कादिनगराणां सजीवं चित्रम् उपस्थापितम्। विविधानि युद्धवर्णनानि वाल्मीकेः वर्णनकौशलं प्रदर्शयन्ति। रामायणे सर्वेषां वीरादिरसानां सञ्चारः अनुभूयते। उदाहरणार्थं पम्पासरसः शोभावर्णनं दृश्यताम्—

(रामः) प्रहृष्टनानाशकुनां पादपैरुपशोभिताम्।
पुष्पितोपवनोपेतां सालचम्पकशोभिताम्॥

षट्पदौघसमाविष्टां श्रीमतीमतुलप्रभाम् ।
स्फटिकोपमतोयाढ्यां श्लक्ष्णवालुकसंयुताम् (पम्पां ददर्श) ।।

एतदेव कारणं यत् सर्वस्मिन् जगति रामायणस्य भूयान् प्रचारः। भारतस्य सर्वासु भाषासु रामायणस्य अनुवादाः रूपान्तराणि चोपलभ्यन्ते। रामायणमुपजीव्यकाव्यमस्ति, अस्याधारेण कविभिः अनेकानि काव्यानि नाटकानि च विरचितानि। इण्डोनेशिया-कम्बुज-थाइलैण्डादिदेशानां भाषासु रामायणस्य रूपान्तराणि कृतानि। तत्र मन्दिराणां भित्तिषु रामकथादृश्यानि अङ्कितानि, साम्प्रतमपि च काले काले तत्र रामायणनाट्यं प्रदर्श्यते।

रामायणं पठित्वा जनस्य तृप्तिर्न भवति। पुनः पुनरपि रामायणस्य पाठे जनो नवं रसं प्राप्नोति। रामायणस्य अध्ययनेन वयं जानीमो यत् शोकविह्वलः कारुण्यमग्नः एव कविरुत्कृष्टं काव्यं रचयति, यथा व्याधेन कृतं क्रौञ्चवधं दृष्ट्वा वाल्मीकेः मुखात् सहसैव इदं काव्यं जातम्—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।

अतएव वाल्मीकिः कथयति—शोकः श्लोकत्वमागतः इति। रामायणस्य सार्वभौमं सार्वकालिकं च महत्त्वं वीक्ष्यैवोच्यते—

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ।।

८

# श्रीमद्भगवद्गीता

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

श्रीमद्भगवद्गीता समस्तसंसारे विख्याता। संसारस्य अधिकांशभाषासु अस्या अनुवादाः सम्पन्नाः। सप्तशतश्लोकात्मके अस्मिन् लघुग्रन्थे सकलमानवतायै शान्तिसन्देशाः प्रदत्ताः। वस्तुतः गीतायां कृष्णार्जुनसंवादमाध्यमेन वेदानाम् उपनिषदां च ज्ञानस्य सारः संगृहीतः।

महाभारते यदा युद्धभूमौ अर्जुनः सम्मुखमेव रणाय समुद्यतानां धृतराष्ट्रपुत्राणां दुर्योधनादीनां सेनां पश्यति तदा तैः भ्रातृभिः अन्यैः सम्बन्धिभिश्च सह असौ योद्धुं नेच्छति। तस्य मनसि मोहः जायते। तदा तस्य रथस्य सारथिरूपेण स्थितः महान् नीतिज्ञः योगीश्वरः श्रीकृष्णः तम् उद्बोधयति युद्धाय च प्रेरयति। सः कथयति यत् मनुष्येण फलस्य चिन्तां न कृत्वा कार्यं कर्तव्यम्। सर्वे जनाः एकस्मिन् दिवसे निश्चितम् आयुः यापयित्वा अवश्यमेव मरिष्यन्ति। परन्तु तदा केवलं तेषां शरीरं नश्यति, आत्मा तु अजरः, अमरः अस्ति, स न नश्यति। अतः

एतेषां बन्धूनां नाशविषये भयं न कर्तव्यम्। यैः शरीरैरेते सज्जनान् उत्पीडयन्ति कपटाचरणं च कुर्वन्ति तेषां नाशः आवश्यकः अस्ति। अतः अस्मिन् युद्धे युद्धं कर्तव्यमेव। अनेन भगवतः कृष्णस्योपदेशेन अर्जुनः ज्ञानं प्राप्य मोहं त्यक्त्वा युद्धाय कृतनिश्चयः अभवत्।

श्रीमद्भगवद्गीता निष्कामकर्मणः उपदेशं ददाति, निर्भीकतां च शिक्षयति। आत्मनः अजरत्वम् अमरत्वम्, व्याप्तिं, सर्वभूतान्तर्यामित्वं च उपदिश्य मनुष्यं त्यागमार्गं दर्शयति। गीतायां संन्यासस्य, कर्मणः, ज्ञानस्य भक्तेश्चापूर्वः समन्वयः लक्ष्यते। अयं समन्वयः एव भारतीयसंस्कृतेः दर्शनस्य विचार-धारायाश्च प्रतीकं वक्तुं शक्यते। गीतायाः सन्देशः विश्व-बन्धुत्वस्य, विश्वशान्तेः सन्देशः, आदर्शमानवस्य च सन्देशः। गीतायाः ज्ञानेन किंकर्तव्यविमूढो जनो मार्गं लभते मानसिकीं शान्तिं चाधिगच्छति। अतएव सर्वशास्त्राणां सारभूता गीता अमूल्यम् अप्रतिमं ग्रन्थरत्नं कथ्यते।

गीतायाः सारः अस्मिन् श्लोके वर्तते—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गो ऽस्त्वकर्मणि॥

## ६

# कालिदासः

कविशिरोमणिः कविकुलगुरुः कालिदासः कविश्रेष्ठः इति उच्यते। कालिदासः प्राचीनकालिकः राष्ट्रकविः उच्यते। कालिदासस्य जन्मस्थानं कश्मीराः वा वङ्गभूमिर्वा राजस्थानं वा उज्जयिनी वेति निश्चितं वक्तुं न शक्यते। न चास्य महानुभावस्य जीवनकालविषये कश्चिद् निर्णयः। महाराजविक्रमादित्यस्य राजसभाया अयं प्रतिष्ठितो विद्वान् इति सर्वैः स्वीक्रियते।

कालिदासस्य काव्ये किञ्चित् अलौकिकम्, अपूर्वम्, असाधारणम् च सौन्दर्यं दरीदृश्यते। तस्य काव्ये आकश्मीरात् आ कन्याकुमारीम्, आ द्वारिकायाः आ प्राग्ज्योतिषम् अपूर्वं स्वाभाविकं च सौन्दर्यवर्णनम् उपलभ्यते। तस्य काव्यरसं निपीय निपीय जनानाम् हृदयम् नृत्येन आन्दोलितम् इव भवति। तत्तुल्यः कोऽपि कविः नासीत्। अतः केनचित् कविना उक्तम्—

पुरा कवीनाम् गणनाप्रसंगे
कनिष्ठिकाधिष्ठितकालिदासा।

अद्यापि तत्तुल्यकवेरभावात्
अनामिका सार्थवती बभूव ॥

कालिदासेन अभिज्ञान-शाकुन्तलम्, विक्रमोर्वशीयम्, मालविकाग्निमित्रं च इति त्रीणि रूपकाणि, रघुवंशम्, कुमार-सम्भवम् च इति द्वे महाकाव्ये, ऋतुसंहारम्, मेघदूतं च इति द्वे खंडकाव्ये विरचितानि। तस्य कौशलम् यथा पद्यरचनायाम् तथैव नाटकेषु वर्तते।

कालिदासेन प्रकृतिः मानवसहचरीरूपेण वर्णिता। यदा तस्य पात्राणि हृष्यन्ति तदा प्रकृतिः अपि प्रफुल्ला भवति। यदा तस्य पात्राणि दुःखितानि भवन्ति तदा प्रकृतिरपि रोदितीव। यथा अभिज्ञानशाकुन्तले चतुर्थेऽङ्के शकुन्तला यदा कण्वाश्रमं त्यक्त्वा पतिगृहं प्रयाति तदा तस्या वियोगे मृगा घासचर्वणं विस्मरन्ति, मयूरास्तस्याः शोके नृत्यं त्यजन्ति, किमन्यत् वृक्षा लताश्चापि रुदन्ति पत्ररूपाणि अश्रूणि च पातयन्ति—

उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥

कालिदासस्य काव्ये मानवमनसोऽपि गम्भीरचित्रणं वयं पश्यामः।

कालिदासस्य काव्यानि व्यंजनामयानि सन्ति। वैदेशिकाः कालिदासं द्वितीयं शेक्सपीयरम् एव मन्यन्ते। गेटेनामा जर्मन-कविः स्वर्लोकभूलोकयोः सौन्दर्यम् एकीभूतमिव अभिज्ञान-शाकुन्तले अवलोकयति।

कालिदासस्य काव्यानां प्रमुखं वैशिष्ट्यम् उपमासौन्दर्यम् एव अस्ति। 'उपमा कालिदासस्य' इति आभाणकम् प्रसिद्धमेव। तस्य उपमायाः एकम् उदाहरणं दृश्यताम्—

संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

अत्र रघुवंशे इन्दुमत्याः स्वयंवरावसरस्य वर्णनमस्ति । इन्दुमती अत्र चलन्ती दीपशिखा इव वर्णिता । वरमालां गृहीत्वा सा यस्य यस्य नृपस्य सम्मुखं याति स स प्रथमं तु प्रसन्नः भवति परन्तु यदा सा अग्रे गच्छति तदा तस्य मुखं तथैव म्लानं भवति यथा दीपप्रकाशशून्याः प्रासादाः भवेयुः । अत्र उपमया एव कालिदासेन नृपाणां मनोभावा अपि स्फुटं प्रदर्शिताः । अनया उपमया एव कालिदासेन दीपशिखाकालिदासः इत्युपाधिरधिगतः ।

१०

# भगवान् तीर्थंकरः तस्य शिक्षाश्च

अस्यां पृथिव्याम् धर्मस्य प्रचारार्थं मनुष्याणाम् उद्धाराय च समये समये महापुरुषाः जायन्ते। भारतभूमिः मानवोद्धाराय एतादृशान् अनेकान् महात्मनः अजनयत्। तेषु तीर्थंकरस्य भगवतो महावीरस्य नाम अग्रगण्यम् अस्ति। एष जैनमतस्य चतुर्विंशः तीर्थंकरः आसीत्।

अस्य जन्म ख्रिस्तात् पूर्वे एकोनशताधिकपंचशततमे वर्षे कौण्डिन्यपुरे अभवत्। अस्य पितुः नाम सिद्धार्थः आसीत्। सः कौण्डिन्यपुरस्य राजा आसीत्। अस्य मातुः नाम त्रिशलादेवी आसीत्। सा वैशाल्या लिच्छवीनरेशस्य कन्या आसीत्। इमं जिन-वर्धमान-निग्गण्ठ-ञातपुत्र-अर्हत इति नामभिः कथयन्ति। अस्य जिनेति नाम आधारीकृत्य जैनमतस्य नाम प्राचलत्।

त्रिंशद्वर्षीयवयसि अस्य संसारात् वैराग्यम् अभवत्। तदा अयं ज्ञानप्राप्त्यर्थम् राजोचितं सुखम्, ऐश्वर्यं, कुटुम्बं च त्यक्त्वा कठोरां तपस्याम् अकरोत्। द्वादशवर्षीय-तपसः पश्चात् अनेन कैवल्यज्ञानं प्राप्तम्, अवशिष्टेषु त्रिंशति वर्षेषु च देशस्य विभिन्नस्थानेषु भ्रमित्वा अयं स्वमतस्य प्रचारमकरोत्। अन्ते

ख्रिस्तात् पूर्वं सप्तविंशत्यधिकपंचशततमे वर्षे सः दिवंगतः। भगवान् महावीरः चारित्र्यसम्पन्नः, जितेन्द्रियः, आत्मवशी च महात्मा आसीत्। अयं स्वपूर्णं जीवनम् आत्मसंयमे तपसि च अयापयत्। सः दृढ़संकल्पी, आत्मजयी च आसीत्। अस्य मनः, वचनं कर्मं च परस्परं पूर्णसामंजस्ये अतिष्ठन्।

तीर्थंकरभगवन्महावीरस्य आदर्शानाम् आधारे प्रतिपादते जैनमते अहिंसायाः प्रमुखं स्थानं वर्तते। अतएव अहिंसा परमो धर्मः कथ्यते। जैनमतस्य त्रयः प्रमुखाः सिद्धांताः सन्ति—अहिंसा, अपरिग्रहः, अस्तेयम् च। एतदतिरिक्तं ब्रह्मचर्यम् अपि महत्त्वपूर्णम् अस्ति। अनेन मनुष्यः शारीरिकं, मानसिकं च बलं प्राप्नोति। वयं सरलतया विचारयितुं शक्नुमः यत् एतेषु उच्चादर्शेषु चलन् संसारः कथमुन्नतः स्यात् भगवान् महावीरः च तत् कीदृशम् समानम् निर्मातुम् इच्छति स्म। तस्य अहिंसा अत्यन्तं गूढा अस्ति, सा केवलं प्राणिनां हिंसाया विरतौ न समाप्तिम् गच्छति। तस्य अनुसारेण तु मनसा कस्यचित् अहितचिन्तनम् अपि हिंसायाः श्रेण्यामायाति।

जैनदर्शनम् एतेषु आदर्शेषु चलित्वा मोक्षं प्राप्तुं प्रेरयति। मनुष्येण विवादेषु न पतितव्यम्। एतदेव जैनदर्शनस्य स्याद्वादसिद्धान्तस्य मूलतत्त्वम् अस्ति। स्याद्वादस्य अनुसारेण संसारस्य सर्वेषु पदार्थेषु सत्त्वम्, असत्त्वं, नित्यत्वम्, अनित्यत्वम् इत्यादयः उभयविधाः धर्माः सम्भाव्यन्ते।

मनुष्येण स्वशुद्धाचरणेन पुद्गलात् अर्थात् कर्मावरणात् मुक्त्यर्थं प्रयतितव्यम्। एतत् परमं लक्ष्यम् अस्ति।

## ११

# स्वामी दयानन्दः

धन्येयं भारतभूमिः यत्र सङ्कटकाले सन्मार्गं दर्शयितुं महापुरुषा जन्म लभन्ते। यद् भारतं पूर्वं सभ्यतायाः संस्कृतेश्च शिखरमारूढम् आसीत् तदेव विदेशिशासकानां पारतन्त्र्यश्रृङ्खलाभिर्निगडितम् अभवत्। सत्यमार्गं विस्मृत्य जना अन्धविश्वासैः अस्पृश्यताबालविवाहदारिद्र्यादिव्यसनेषु पतिता आसन्। स्त्रीणां शिक्षा निषिद्धा आसीत्। शिक्षार्थं ज्ञानवृद्ध्यर्थमपि च जनाः विदेशगमनाद् भीता आसन्।

एतादृशे काले १८२४ तमे ख्रिस्तीये संवत्सरे गुजरातप्रदेशस्य काठियावाड़जनपदे टङ्कारानामके नगरे श्रीमद्दयानन्दः जन्म अलभत। अस्य बाल्यनाम मूलशङ्करः आसीत्। एकस्मिन् शिवरात्रिव्रतावसरे रात्रौ अयं बालः शिवलिङ्गस्य उपरि कूर्दतः मिष्टान्नं च भक्षयतः मूषकान् दृष्ट्वाऽतीव निराशः संवृत्तः। तस्य मनसि आयातं यदेतत् शिवलिङ्गं वास्तविकः परमेश्वरो नास्ति यतः एतत् स्वरक्षां मूषकेभ्योऽपि कर्तुं न शक्नोति।

तस्यां बालावस्थायामेव मूलशङ्करः सत्यं ज्ञातुं परमेश्वरम् अन्वेष्टुं च गृहं त्यक्त्वा संन्यासी अभवत्। स बहुषु स्थानेषु

पण्डितानां मध्ये अभ्रमत् विविधान् ग्रन्थान् च अपठत्। परन्तु तस्य मनसि निश्चयो नासीत् अतएव शान्तिर्नासीत्। अन्ते सः मथुरायां प्रज्ञाचक्षुषं स्वामिविरजानन्दं गुरुरूपेण अलभत। तस्मात् पाणिनीयं व्याकरणमधीत्य असौ पूर्णब्रह्मचर्यं धृतवान्।

तेन स्वकीयं नाम दयानन्दः इति कृतम्। गुरुणा आदिष्टः दयानन्दः सर्वं जीवनं वेदप्रचारे देशाद् अज्ञानापसाराय च समर्पितवान्। सर्वप्रथमं तेनैव उद्घोषितं यत् वैदेशिकशासनस्य समाप्तिं विना भारतजनाः सुखिनो न भविष्यन्ति। स्वातन्त्र्यार्थम् उन्नत्यर्थं च जनेषु भेदविहीनं संघटनम्, अन्धविश्वासानां त्यागः, कुप्रथानाम् उन्मूलनं चरित्रनिर्माणं च आवश्यकम् मतम्। किं सत्यं किं च सर्वहितकरम् इत्यस्य निर्धारणाय तेन बहूनां ग्रन्थानाम् अध्ययनं कृत्वा "सत्यार्थप्रकाशः" इति ग्रन्थो रचितः। तेन वेदा नवदृष्ट्या व्याख्याताः तेषामध्ययनं च प्रचारितम्। सः स्वदेशजनान् वेदमार्गानुसारं सज्जनान् आर्यान् च विधातुम् ऐच्छत्। अतस्तेन चरित्रनिर्माणाय आर्यसमाजस्य स्थापना कृता। अस्य नियमेषु मतभेदं विना एकेश्वरस्योपासना कुप्रथाः त्यक्त्वा च सर्वजनकल्याणभावना निहिता। दयानन्दस्यैव प्रयत्नैः स्त्रीषु शिक्षाप्रसारः अभवत् तासां दशायां संशोधनं च अभवत्।

परन्तु "द्विषन्ति मन्दाश्चरितं महात्मनाम्"। अतः केनचित् मदान्धेनासौ विषं पाययित्वा १८८३ तमे ख्रिस्तीयसंवत्सरे दीपावलीदिवसे मृत्युं प्रापितः। एवं सर्वेषां मनस्सु ज्ञानस्य दीपान् दीपयित्वा अयं महात्मा दिवंगतः।

१२

# महात्मा गान्धिः

महात्मा गान्धिः भारतस्य राष्ट्रपिता कथ्यते। विश्ववन्द्यस्य प्रातःस्मरणीयस्यास्य महात्मनो जन्म काठियावाड़प्रदेशे पोरबन्दरनामके स्थले एकोनसप्तत्यधिकाष्टादशशततमे ख्रिस्तीयवर्षे अभवत्। अस्य पूर्णं नाम मोहनदासकर्मचन्दगान्धिः इत्यस्ति।

आबाल्यादेव अयं सत्यवादी आसीत्। अस्य विवाहः कस्तूरबानाम्न्या धार्मिकमहिलया बभूव। कुशाग्रबुद्धिरयं विधिशास्त्रस्योच्चशिक्षां प्राप्तुं विदेशं गतः, परन्तु तत्र तेन संयमपूर्वकं मांसमदिरापरिहारः कृतः। एवम् आत्मशुद्धिपूर्वकं प्रावीण्यं लब्ध्वा स्वदेशं प्रतिनिवृत्य पुनः वृत्त्यर्थम् अफ्रीकां गतः। तत्रत्यानां भारतीयानाम् आंग्लशासकैः कृतां दुर्दशामवलोक्य तस्य हृदयं द्रवीभूतं, तदर्थं च तेन न्याययुद्धं प्रारब्धं येन तत्रत्यानां भारतीयानां दशा किञ्चित् परिष्कृता।

तदनु भारतं प्रतिनिवृत्य आंग्लशासने भारतीयजनानां कष्टानि दृष्ट्वा तेन सर्वं जीवनं भारतीयस्वातन्त्र्ययुद्धाय आहुतम्। तेन हरिजनोद्धारेण अन्यैश्चोपायैः भारतीयजनेषु

ऐक्यभावः सञ्चारितः यतः संघटनेन ऐक्येन च विना आंग्ल-शासनात् मुक्तिः असंभवा आसीत्। तेन सम्यक् ज्ञातं यत् महत्या आंग्लशासनशक्त्या अहिंसयैव योद्धुं शक्यते न हिंसया। अतएव तेन अहिंसकैः असहयोगान्दोलनैः आंग्लीया भारत-शासनं त्यक्तुं विवशीकृताः। सः स्वयं सत्याचरणम् अकरोत्। तेन भारतीयाः स्वदेशिवस्तूनां प्रयोगाय विदेशिवस्तूनां परित्यागाय च प्रतिबोधिताः। भारतीयतां भारतीयगौरवं च जनमानसे प्रतिबोधयितुं तेन संस्कृतज्ञानस्य महत्त्वं ख्यापितं हिन्दीभाषायाः प्रयोगश्च प्रसारितः। सर्वधर्मसमभावः तस्या-न्दोलनस्य मूलमासीत्। स्वातन्त्र्ययुद्धे सः अनेकवारं कारागारे निगृहीतः। सर्वं भारतीयं तस्य प्रियम् आसीत्, दरिद्राणां दुःखिनां विपन्नानां च कष्टेन तस्य हृदयं द्रवीभूतम्, तेषामुत्था-नाय तेन महान् प्रयत्नो विहितः। ग्रामोन्नतिरेव भारतस्य उन्नतिरिति तेन सत्यं प्रतिपादितम्।

अष्टचत्वारिंशदधिकैकोनविंशतिशततमे ख्रिस्तीयवर्षे जनवरीमासस्य त्रिंशे दिवसे कस्यापि अविमृश्यकारिणः नाथूरामगोड्सेनाम्नो जनस्य गोलीप्रहारेण दिवंगतोऽयं महात्मा।

तस्य त्यागेन नीत्या च भारतं स्वतन्त्रमभूत्। अद्यापि वयं तस्य नीतिमनुसरन्त एव यदि भारतं निर्मातुं प्रयतामहे तदैव साफल्यं प्राप्स्यामः।

# १३

## वसन्तर्तुः

भारते षड् ऋतवः भवन्ति—ग्रीष्मः, वर्षाः, शरद्, हेमन्तः, शिशिरः, वसन्तश्च। वसन्तः शिशिरस्य पश्चात् आगच्छति। वसन्तः ऋतुराजः इति उच्यते।

शिशिरे सर्वेषाम् वृक्षाणाम् पत्राणि पतन्ति। वृक्षाः नग्नाः इव दृश्यन्ते। प्रकृतिरपि शोकार्ता इव दृश्यते।

वसन्ते सर्वेषु वृक्षेषु नवपल्लवाः विकसन्ति। वृक्षाणां शाखा पुष्पाणां भारेण नमन्ति। उपवनेषु मयूराः स्वपक्षान् प्रसार्य नृत्यन्ति। खगाः मधुरगीतानि गायन्ति। कोकिलानां तु अयमृतुः उत्सवः एव। यत्र तत्र आम्रवृक्षेषु कोकिलानां कुहूकुहू इति रवः श्रुतिगोचरो भवति। वनेषु, उपवनेषु च पादपेषु नानाविधानि नानावर्णानि च पुष्पाणि विकसन्ति। क्वचित् पलाशवृक्षेषु किंशुककुसुमानि रक्तेन दिशः रञ्जयन्तीव, अन्यत्र च तडागेषु पङ्कजानां शोभा पथिकानां मनो हरति, क्वचित् पुनः कर्णिकार-पुष्पाणां पीताम्बरमिव प्रसृतं लक्ष्यते, कुन्दपुष्पाणां सुरभिः दूरतः एव जनान् आकर्षति। सर्वत्र मन्दसमीरः सुगन्धयुतः वहति। उपवनेषु आम्रवृक्षेषु मञ्जर्यः विकसन्ति। भ्रमराः मधुरं

गुञ्जन्ति । ते पुष्पेषु उपविश्य तेषां रसं पिबन्ति ।

क्षेत्रेषु धान्यपंक्तयः नृत्यन्ति इव । सर्षपपुष्पाणि भूम्यै पीतपरिच्छदमिव वितरन्ति । नेदानीं दिवसाः अति उष्णाः भवन्ति न च रात्र्योऽतिशीताः । जलमपि सुखस्पर्शं भवति । जनाः अपि प्रसन्नाः भवन्ति । ते नववस्त्राणि धारयित्वा नृत्यन्ति, गायन्ति च । जनाः उत्सवान् मानयन्ति । सर्वत्र अपूर्वः उत्साहः प्रमोदश्च दृश्यते । प्रकृतिरपि विविधवर्णपरिधानमयी प्रसन्ना इव दृश्यते ।

होलिकोत्सवोऽपि वसन्ते एव भवति । संस्कृतकविभिः वसन्तर्तोः शोभाया मनोहरं वर्णनं कृतम् । कालिदासः ऋतुसंहारे कथयति यत् वसन्ते सर्वं जगत् अतिसुन्दरं भवति—

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये चारुतरं वसन्ते ॥

यथा जीवने बाल्यावस्था विशेषोल्लासमयी सुखमयी च वर्तते, तथैव वर्षे वसन्तकालः । वसन्तः सर्वेभ्यो नवजीवनसंदेशं प्रददाति । मन्ये ईश्वरोऽपि सृष्टेः सुन्दरतमं रूपमस्मिन्नेव ऋतौ प्रकटयति । अतएव गीतायां भगवता कृष्णेन उच्यते यत् 'अहम् ऋतूनां कुसुमाकरः अस्मि' ।

१४

# वर्षर्तुः

ग्रीष्मानन्तरम् वर्षर्तुः आगच्छति। अयम् जीवनदायी ऋतुः कथ्यते यतः ग्रीष्मकाले सूर्यस्य आतपेन पृथ्वी तपति, जनाः, पशवः च व्याकुलाः भवन्ति। तडागेषु, नदीषु च जलं शुष्यति। सर्वे प्राणिनः च जलस्य अभावे इतस्ततः भ्रमन्ति जलं च अन्विष्यन्ति। वृक्षलतागुल्माः अपि जलाभावे शुष्काः भवन्ति। वृक्षाणां पत्राणि पतन्ति ते च निर्वसनाः इव दृश्यन्ते। ग्रीष्मातपेन तप्तं निखिलं जगत् विकलमिव भवति। तदैव लोकानाम् सन्तापं हर्तुं, तान् उज्जीवयितुम् इव वर्षर्तुः आगच्छति।

वर्षा-ऋतौ आकाशो मेघैः आच्छंन्नो भवति। वर्षाकाले वर्षन् देवो नटराज इव भाति। अस्य प्रत्येकमङ्गे अभिनये च विद्युत इव चापल्यम् अस्ति। यदा चायं दिशि दिशि असंख्यैः पादैः धावति कूर्दति च तदा धरा रोदितीव। तस्याः अश्रुभिः अनेकाः वक्राः धाराः वहन्ति। परस्परं च मिलित्वा ताः नदी-तडागादीनां प्रवाहं विशन्ति। पर्वतेभ्यः समतलं प्रति धावन्तीनां गत्या तासां प्रियमेलनाकुलता स्पष्टैव। देवे वेगेन वर्षति ता उन्मत्ताः इव शिलासु पतन्ति, पथि धूलिं वृक्षपत्राणि च संहरन्ति,

वृक्षान् परिक्रामन्ति, तारञ्च स्वनन्ति। तासां बाहुल्येन नदी कासारतडागादयः सर्वे जलाशयाः सम्पूरिताः। बहवश्च स्वतट मुल्लंघ्य बहिर्भूमौ वहन्ति। यद्यपि मनुष्येण अनेकेषु स्थले नियन्त्रितो जलप्रवाहः तथापि तेन प्रतिवर्षं जनक्षतिर्भवति ग्रामा ध्वस्यन्ते अन्नस्य च नाशो भवति।

वर्षा-ऋतौ प्राकृतिकं दृश्यम् अतीव रमणीयम् भवति प्रकृत्याः दिगन्तव्यापिनी श्यामलता सर्वेषां मनस्सु आह्ला सिञ्चति। अस्मिन् ऋतौ प्रकृतिनटी विविधरूपाणि धारयति कदाचित् विद्युतः विस्फुरन्ति कदाचित् झञ्झावातः वाति कदाचित् इन्द्रधनुषः विविधवर्णा शोभा दृश्यते। गाढे तमसि दीव्यन्त्या तडिता कृष्णपट्टे बालचित्रकारेणेव निरर्थका रेखा खचिताः याः क्षणे एवान्तर्धानं गच्छन्ति।

वर्षाकाले रवेः सुवर्णपिण्डस्य दर्शनं दुर्लभम् एव। स महातेजोराशिः क्षितिजपार्श्वाद् वर्धमानैः भीषणश्यामघनैः आच्छादितो भवति। तदा नीले नभसि घोरान्धकारेण जगदि दिनेऽपि रजनीतमः धारयति। क्षणपूर्वं यत्रातपो दृश्यते तत्रैव अपरस्मिन् क्षणे सघनघनघटाभिः सर्वं तमोनिगूढमिव भवति सतडिद्गर्जनं च मेघो वर्षति।

वृष्टेः पूर्वं मयूराश्च नर्तकीव मुदितचेतसः ताभिः घटाभि मेघस्य गर्जनेन च मृदङ्गनादेनेव पक्षान् प्रसार्य नृत्यन्ति। सर्वे कोटरान्तरस्थिताः खगाः बहिर्निष्क्रम्य विहरन्ति। शिशुगणा निश्चिन्ताः उद्यानेषु क्रीडन्ति। मन्दः पवनो वृक्षान् समीरयति। कापि हृदयहारिणी शोभा।

परं यदैव वृष्टिरारभते, खगाः नीडान् प्रत्यागच्छन्ति गावश्च जलकणेभ्यः आत्मरक्षार्थं स्थानं किमपि धावन्ति। इमे

कणाः कृ[illegible]म् सु अमृतमेव यद्भूमौ पतित्वा मृत्तिकायाः रत्नानि उत्पादयति, यैः सर्वाणि भूतानि जीवन्ति।

वर्षामनु प्रदोषसमये छिन्नभिन्नमेघाः कमप्यज्ञातप्रदेशं गच्छन्ति विमलाकाशे चेन्द्रधनुः व्योम्नः पृथिव्याश्चाति दूर-स्थिते द्वे स्थाने योजयति। तस्य दिव्यज्योतिः दृष्टये सुखं प्रददाति। वृष्टिविरामं ज्ञात्वा सर्वे पक्षिगणाः स्वैरं नीडेभ्यः निर्गत्य भूयो नभसि विचरन्ति मधुरं कलरवं च कुर्वन्ति। तडागकूपादिषु मण्डूकानां "टर्रटर्र" इति ध्वनिः सर्वत्र श्रूयते।

श्रावणमासे स्थितोऽयं ऋतुः भारतीयकृषकाणां जीवनम्। पुरा तेषां श्रमफलमस्यैव ऋतोः प्रसादेन भवति। यतस्तदा सर्वे कृषीवलाः बद्धाञ्जलयो वृष्टिर्भवेदिति देवं प्रार्थयन्ते स्म। परमधुना तु विज्ञानस्य उन्नत्या नदीनाम् जलं यथेप्सितं सेचनार्थं योज्यते।

एतादृशः सुखकरोऽपि अयं कालो निर्धनानां दुःखोत्पादकोऽस्ति। ग्रीष्मकाले वृक्षाणां छायायामुपविश्य ते निर्धनाः आत्मानम् रक्षन्ति। शीतकाले ते भानोस्तापेन रक्षिताः शीतात्। परन्तु वर्षासु तान् गृहरहितानापः क्लेदयन्ति। न तेषां क्वापि रक्षा। तेषां पर्णकुटीराणि तु जलवेगं रोद्धुं न शक्तानि।

कदाचित् वृष्टिः अत्यधिकमात्रायाम् भवति। तदा नदीषु सरोवरेषु च जलस्तरः वर्धते। भूमिः पङ्किला भवति। अतिवृष्ट्या स्थाने स्थाने जलाप्लावः भवति। मार्गाः अवरुद्धाः भवन्ति। क्षेत्रेषु अन्नमपि नश्यति। वातावरणं दूषितं भवति। कीटाः अपि जायन्ते। अतः अनेके रोगाः उत्पद्यन्ते। एवं जीवनदायी वर्षर्तुरपि जीवनापहर्ता भवति। अतएव वैदिकी प्रार्थनाऽस्ति "निकामे-निकामे नः पर्जन्यो वर्षतु फलवत्यो न

ओषध्यः पच्यन्ताम्" इति ।

वर्षा हि लोकानां जीवनस्य आधारः। जलेन विना प्राणिन जीवितुं न शक्नुवन्ति। जलं च वृष्ट्या एव लभ्यते। अतए भारतवर्षे स्थाने स्थाने श्रावणमासोत्सवाः मान्यन्ते पुरातनकाले श्रावणमासे एव गुरुकुलेषु वार्षिकं वेदाध्यय प्रारभ्यते स्म।

१५

# गणतन्त्रदिवसः

खिृस्तीयवर्षानुसारं जनवरीमासस्य षड्विंशे दिवसे अस्माकं देशे गणतन्त्रदिवसः ससमारोहं सम्भाव्यते। अयं हि दिवसो भारतेतिहासेऽतीवमहत्त्वपूर्णः। पञ्चाशदधिकैकोनविंशतिशततमे खिृस्तीयवर्षे तस्मिन् दिवसे ऽनेकशताब्दीपारतन्त्र्यानन्तरं स्वतन्त्रं भारतराष्ट्रं गणतन्त्रमुद्घोषितं तस्य च स्वकीयं संविधानं स्वकीया च शासनप्रणाली तद्दिनात् प्रवृत्ते। एतदनन्तरमेव भारतेन पूर्णस्वातन्त्र्यं लब्धमिति कथयितुं शक्यते। तस्यैव महत्त्वपूर्णदिवसस्य स्मृतौ प्रतिवर्षमेतद्दिनं राष्ट्रियपर्वरूपेण सम्मान्यते। अस्मिन् दिने देशस्य प्रमुखेषु नगरेषु राष्ट्रियध्वजारोहणं भवति, राजकीयभवनानि च दीपमालाभिर्दीप्यन्ते, मेलकानि आयोज्यन्ते। अस्मिन् दिवसे विशिष्टः समारोहो राजधान्यां दिल्ल्यां समायोज्यते। प्रातरेव राष्ट्रपतिभवननिकटस्थे विजयचतुष्पथे विशिष्टे मञ्चे राष्ट्रपतिः भारतीयसेनायाः त्रिभ्य एव जलस्थलवायुसेनाङ्गेभ्यो ऽभिवादनं स्वीकरोति। ततो ऽपि पूर्वं राष्ट्रपतिः विशिष्टेभ्यः सैनिकेभ्यो विशेषोत्साहशौर्यकौशलप्रदर्शनार्थं पदकानि वितरति। सेनाङ्गैः राष्ट्रपतेरभिवादनावसरे तेषां सेनाङ्गानां स्वोपकरणैः साकं विजयचतुष्पथादारभ्य राजधान्याः प्रमुखराजमार्गेषु रक्तदुर्ग-

पर्यन्तं शोभायात्रा भवति । इमां शोभायात्रां लक्षशो जना मार्गमुभयतो वा वृक्षेषु वा भवनच्छदिषु वा सौत्सुक्यमवलोकयन्ति । इमामेव द्रष्टुं भारतस्था विविधदेशानां राजदूता अन्ये च विशिष्टा वैदेशिकातिथयोऽपि राजपथं समवयन्ति । सुमधुरसैनिकवाद्यसंगीतसंवलिता इयं शोभायात्रा सर्वेषां चेतांसि आन्दोलयति । अस्मिन्नेवावसरे आसेतुहिमाचलम् आद्वारिकाकामरूपं च निखिलभारतदेशस्य सांस्कृतिकी औद्योगिकी चापि शोभायात्रा भवति । वैविध्यमयं भारतीयं लोकजीवनं तत्रैकत्रैव वयं द्रष्टुं पारयामः । प्रतिवर्षमेतानि शोभायात्रादृश्यानि परिवर्तितान्यत एव मनोहरतराणि नेत्रयोरुत्सवं जनयन्ति । अत एव महति शीते ऽपि आप्रत्यूषादेव जनाः स्वस्थानं गृह्णन्ति । सर्वं तत्र सुन्दरं सर्वं शोभाढ्यं भारतं नृत्यतीव पुरतः । प्राचीनं वा नूतनं वा, निकटस्थं वा दूरस्थं वा सर्वं तत्र साक्षाद् भवति भारतगौरवम् । अन्ते चाकाशे विमानैस्त्रिवर्णो भारतीयध्वजो विशिष्टधूमोद्गमैर्निर्मीयते यद्धि दृष्ट्वा जनाश्चकितचकिता इव भवन्ति । रात्रौ राजकीयभवनानि दीपमालाभिः विद्योतन्ते क्वचिच्च ज्वलनक्रीडनकप्रदर्शनमपि भवति ।

अस्मिन् दिवसे राष्ट्रपतिः गतवर्षस्य विशिष्टविद्वद्भ्यः पुरस्कारान् सम्मानान् वोद्घोषयति । अयं दिवसो ऽस्मान् सर्वान् भारतीयान् भेदभावान् विस्मृत्य एकभावेन राष्ट्ररक्षार्थं राष्ट्रसेवार्थं च प्रेरयति । अक्षुण्णं चिरं तिष्ठतु भारतीयं गणतन्त्रम् ।

जनगणहृदयानां नित्यमाह्लादकारी
सकलवुधविकासो दुःखिपीडापहर्ता ।
प्रतिदिनमपि नानायोजनाभिः समृद्धो
भवतु भुवि यशस्यो देश एष स्वतन्त्रः ।।

## १६

# दीपावल्युत्सवः

दीपावल्युत्सवो भारतस्य सर्वप्रसिद्धः उत्सवः अस्ति। सर्वे देशवासिनः सर्वेषु प्रदेशेषु दीपावल्युत्सवं दीपमालां प्रज्वाल्य सम्भावयन्ति। विदेशेष्वपि भारतवंशजा इममुत्सवं न विस्मृतवन्तः। अयमुत्सवः कार्तिकमासस्यामावस्यायां मान्यते। प्रमुखतया ऽस्य सम्बन्धो रामकथया सह वर्तते। चतुर्दशवर्षवनवासानन्तरम् अयोध्यां प्रत्यागते रामे नगरवासिनः प्रमुदिताः स्वगृहेषु दीपानि प्रज्वाल्य अपारं मोदं प्रकटितवन्तः। तदाप्रभृत्येव प्रतिवर्षमयमुत्सवो मान्यते। बहुषु स्थानेषु नववर्षोत्सवरूपेण दीपावल्या महत्त्वमस्ति। व्यापारिणो वार्षिकं लेखमस्मादेव दिनादारभन्ते।

जैनसम्प्रदायसंस्थापकस्य भगवतो महावीरस्य, आर्यसमाज-संस्थापकस्य स्वामिदयानन्दस्य च निर्वाणदिवसो ऽप्ययमेव। पौराणिकी कथा वर्तते यत् प्रथम आयुर्वेदाचार्यो धन्वन्तरिरपि लोकेभ्यः संजीवनौषधं दातुमस्माद्दिनात् दिनद्वयपूर्वं प्रकटितः।

दिनमेतत् समृद्धिदिवसरूपेण मान्यते। गृहाणि संशोध्यन्ते नानाविधचित्रपताकातोरणादिभिश्च विभूष्यन्ते। पण्यवीथीनां

कान्दविकानां च समृद्धिः नयनगोचरतां भजति। रात्रौ सुमनोहरपरिधानालंकृता जनाः परस्परं सभाजयन्ति, गृहेषु लाजैः मिष्टान्नैः च यज्ञादिकं लक्ष्मीगणेशपूजनं च विदधति। ततो दीपमालाद्योतितानि सर्वेषां गृहाणि अपूर्वां कांचिद् अभिख्यां (शोभां) धारयन्ति स्मयन्त इव। बालयुवकाः विविधैरग्निक्रीडनकैः क्रीडन्ति। नगरे नगरे विविधेषु प्राङ्गणेषु दीपावलीमेलकान्यायोज्यन्ते।

परम्परयात्रैको दोषोऽपि समाजे समुद्भूतः। केचन जनाः द्यूतमप्यस्मिन् दिने 'धर्मं' इति आचरन्ति। परन्तु वयं जीनामो यत् द्यूतं न तु समृद्धेरपि तु विनाशस्य कारणमेव। लक्ष्मीस्तेन न प्रसीदति, रुष्टैव भवति।

वस्तुतः उत्सवोऽयं सर्वेभ्यो नवजीवनस्य समृद्धेः परिशुद्धेश्च सन्देशं ददाति। प्रकृतिरपि वर्षर्तोरनन्तरं सर्वत्र प्रसन्ना विमला च दृश्यते। अन्धकारे प्रकाशस्य, अज्ञाने च ज्ञानस्य विजयरूपोऽयमुत्सवः सर्वानस्मान् धर्माचरणाय ज्ञानोपार्जनाय च प्रेरयति।

१७

# दिल्ली नगर्य्यां दर्शनीयानि स्थानानि

भारतमिदं वीराणाम् अन्येषां च कलाविदां महापुरुषाणाञ्च भूमिः। अद्यापि देशस्य प्रत्येकं खण्डे तेषां स्मारकाणि दृष्टिपथम् आयान्ति। अस्य देशस्य ऐश्वर्यशीलैः नृपैर्निजसुखाय विशालानि रम्याणि च भवनानि निर्मितानि। अस्य ये वीराः महापुरुषाश्च आपत्तिकाले देशस्य साहाय्यमकुर्वन् तेषामनन्याः प्रतिमाः रत्नैरलङ्कृतेषु मन्दिरेषु अधुनापि देशस्य खण्डे खण्डे विराजन्ते। यत्रापि ईदृशाः प्रासादादयो वर्तन्ते तान्येव भारतीयानां पवित्राणि दर्शनीयानि च स्थानानि सन्ति।

दिल्ली पुनः आ प्राचीनकालादेव राजधानी अभूत्, असकृत् इयं युद्धेषु ध्वस्ता, असकृत् चास्याः पुनर्निर्माणं सञ्जातम्। अत एवात्र एवंविधानां स्थानानाम् बाहुल्यमस्ति।

सर्वप्रथमम् लोहितदुर्गः (लालकिला) इति प्रसिद्धो दुर्गोऽस्ति यो दिल्लीनगर्याः शाहजहाँनृपेण निर्मितः। यतोऽस्य बाह्यभागोऽरुणाभिः शिलाभिः निर्मितः, अतोऽयं लोहितनाम्ना प्रसिद्धः। अस्मिन् दुर्गे स्फटिकनिर्मितं कारुकार्यं दृश्यते। दुर्गनिर्माणे कारूणाम्, कलाचातुर्य्यं स्पष्टमेव। विचित्रचित्रकलां दृष्ट्वा

मनुष्यः चिन्तयति किमिदं सर्वं मनुजकरेणैव कृतम् निसर्गेण वा इति। अत्र मुख्यतया 'साधारणसभाभवनं' (दीवाने आम), 'विशिष्टसभाभवनं' (दीवाने खास) च दर्शनीये। एकः कक्षः सर्वत एव दर्पणखण्डैर्मण्डितः।

"जामा मस्जिद" इति नाम्ना प्रसिद्धमेकं मोहम्मदीयानाम् उपासनागृहं दुर्गस्य समीपे वर्तते। इदमपि शाहजहानेन कारितं कार्यमेव। इदन्तु पूर्णरूपेण अरुणैः पाषाणैः निर्मितम्। प्रतिसप्ताहं शुक्रवासरे बहवो मोहम्मदीयाः अत्र कुरानशरीफेति धर्मपुस्तक-वाचनश्रवणाभ्याम् उपासनायै च गच्छन्ति। तेषां गमनागमन-दृश्यं तु अवलोकनीयमेव।

अहो ! किमिदम् उच्चस्तम्भः इव पाषाणनिर्मितं भवनम्। कुतुबस्तम्भोऽयम्। केचित् वदन्ति यत् दासवंशस्य प्रथमेन कुतुबुद्दीनभूपतिनारब्धोऽयम् अल्तमशेन सम्पूरितः। अन्ये च इति-हासविदः पृथ्वीराजः एवास्य निर्माता इति शंसन्ति। तदनुसारेण तेन महाराजेन दिल्ल्यधीश्वरेण वेधशालेयं निर्मापिता तामभि-तश्च हिन्दूमन्दिराणि, परन्तु पश्चात् मोहम्मदीयशासकैस्तानि ध्वस्तानि मस्जिदरूपेण च परिणमितानि। अस्याकृतिः विस्मय-करी अस्ति। अस्य गगनचुम्बिस्तम्भस्य पञ्च भूमयः सन्ति। समीपवर्ती विशालः स्थूललौहस्थाणुस्तु नूनं राज्ञा अनंगपालेन विष्णुपदगिरेः आनीय स्थापितः। कुतुबमीनारमभितः बहवः प्राचीनध्वंसावशेषाः सन्ति। एतेषां भग्नावशेषाणाम् एकैकः पाषाण इतिहासस्य दर्पणः इव।

प्राचीनदुर्गः इति (पुराना किला) पाण्डवानां विशालदुर्गोऽपि दिल्लीनगर्यां वर्तते। अस्य भग्नाः प्राकाराः कालक्रमेण कृष्णवर्णा जाताः। पाषाणाः अस्य प्राचीनताम् प्रकटीकुर्वन्ति। नात्र कोऽपि

भारतीयः यो दुर्गं दृष्ट्वा महाभारतं न स्मरति। कस्य भारतीयस्य मनस्तत् महायुद्धं स्मृत्वोत्साहं नाधिगच्छति? वयमेव भारतीयाः येषां पूर्वजाः ईदृशाः गौरवसम्पन्नाः महावीराश्च आसन् इति को न चिन्तयति। पञ्च सहस्राणि वर्षाणि अतीतानि। विशालानि राज्यानि आगतानि तथैव च गतानि, शताब्द्यः अतीताः, परन्तु दुर्गस्तथैव स्थितः।

फीरोजशाहकोटलेति फीरोजशाहस्य दुर्गोऽस्ति। परन्तु अद्यास्याधिकांशः भग्नः। अस्मिन् दुर्गे फीरोजशाहेन कस्मादप्यन्यस्मात् स्थानादेकः अशोकस्तम्भ आनीय स्थापितः। अस्मिन् स्तम्भे पालिभाषायाम् अशोकस्योपदेशा उत्कीर्णाः।

नवदिल्ल्यामेका "जन्तरमन्तर" इति केनापि जयपुरराजेन षोडश्यां शताब्द्यां निर्मिता वेधशाला वर्तते।

! इमानि आधुनिकानि स्थानानि वर्ण्यन्ते !

बिड़लानाम्ना महाश्रेष्ठिना निर्मितं सुविशालं रमणीयं लक्ष्मीनारायणमन्दिरमप्यस्यामेव नगर्यां शोभते। एतन्मन्दिरमवलोकयितुम् जनाः सुदूरप्रदेशेभ्य आयान्ति। अस्मिन् मन्दिरे देवानाम् महापुरुषाणां च स्फाटिकाः रम्याः प्रतिमाः सन्ति। प्रतिदिनम् घण्टादिवाद्यैः साकम् तारस्वरेण देवस्तुतिः क्रियते। अत्र भक्ताः श्रद्धयान्विताः पुण्यं लभन्ते। निकटवर्तिनि बौद्धमन्दिरे महात्मनः बुद्धस्य स्फाटिका दिव्या प्रतिमास्ति। मन्दिरस्य पृष्ठतः वाटिकापि जनानाम् विश्रामाय निर्मिता।

यमुनायाः तटे राजघाटे महात्मनः गान्धिनः समाधिरस्ति यः प्रदर्शयति यत् अस्मिन् घोरकलियुगे अपि भारतभूमौ सत्यमार्गगामिनो महर्षयः जायन्ते।

संसद्भवनमपि आंग्लशासकैर्निर्मितम् अतिविशालमाधुनिकं

च भवनमस्ति यत्र भारतवर्षस्य राजविधानानि जनप्रतिनिधिभिः निर्मीयन्ते । अस्य सम्मुखे उत्तुङ्गं भारततोरणमस्ति यस्मिन् तेषां सैनिकानां नामानि उत्कीर्णानि ये द्वितीयमहायुद्धे मृताः । तोरणस्य पुरतः देशरक्षायै हुतात्मनां सैनिकानाम् प्रतीकरूपेण दम्भोलेरग्रे शिरस्त्राणं निहितम् । तत् परितः सततमेव "जवान-ज्योतिः" जाज्वल्यते ।

प्राचीनदिल्ल्यां चान्दनीचौके नगरनिगमभवनस्य पुरतः स्वातन्त्र्ययोद्धुः महात्मनः श्रद्धानन्दस्य विशाला मूर्तिः स्थापिता । तत्रैव गुरुतेगबहादुरस्य स्मृतिशेषस्य गुरुद्वारशीशगंजमन्दिरं वर्तते । तत्र च विशिष्टपर्वसु जनसम्मर्दो दर्शनीय एव ।

उपलक्षणमात्रमत्र कतिचिदेव प्रमुखानि दर्शनीयानि स्थानानि वर्णितानि । इतोऽप्यन्यानि बहूनि राष्ट्रपतिभवन-राष्ट्रियसंग्रहालयजन्तूद्यानप्रभृतीनि स्थानानि दिल्लीनगर्यां वर्तन्ते । सकलापि दिल्लीनगरी एवं विशालं किञ्चिदितिहास-स्मारकमिति कथयितुं शक्यते ।

१८

# शैलभ्रमणम्

विभिन्नस्थानेषु भ्रमणम् मे बाल्यकालादेव भृशं रोचते। ततो मम आग्रहेण षोडशे वर्षे शीतावकाशे पित्रा नीतोऽहं शैल-भ्रमणाय शिमलाख्यं पर्वतीयनगरम्। दिनावसाने यात्रायै आवश्यकानि वस्तूनि संगृह्य संयानेन आवां दिल्लीनगर्याः प्रस्थितौ। निशि सर्वे यात्रिणो स्वस्वस्थानेष्वेव नेत्रे निमील्य स्वप्नजगत् प्राविशन्। परन्तु अहम् गवाक्षम् उद्घाट्य पूर्णचन्द्रेण तारागणैश्च सज्जितं नभोमण्डलमवालोकयम्। मन्दशीतवायुस्पर्शः ममाङ्गेषु हर्षमुदपादयत्।

अतीते हि स्वल्पे काले अहमपि सुप्तः। यदाहं प्रबुद्धः तदा भारहाराः भारं बहिष्कुर्वन्तीत्यहं पश्यामि। मया च पिता पृष्टो हन्त! तात! किं प्राप्ता शिमलानगरीति। तदा तु नगरी सा विचित्रा विद्युत्प्रकाशेन स्वर्ग इव प्रतिभाति स्म। अहं च पित्रा ज्ञापितो यत्तत्स्थानं कालकाख्या नगर्यस्ति।

स्वभारमन्यस्मिन् लघुतरे संयाने स्थापयित्वा तस्मिन्नेव चोपविश्य प्रातः षड्वादनसमयेऽहं पित्रा सह पर्वतीययात्रायै प्रस्थितः। इदानीमस्मानभितो विषमा भूमिः उत्तुङ्गशिर/४६

वृक्षाश्च। सर्वत्र सघनगुल्मैः लताकुञ्जैश्च हरिता वनभूमिः रेजे।

तत् संयानमस्मान् पार्वतवक्रमार्गैः सुरङ्गैश्च भुजङ्गम इव अवहत्। धूमैः वक्रमार्गगमनेन च मम चेतोऽस्वस्थमभवत्। मया चक्षुषी निमीलिते भूयश्च बहिर्न दृष्टम्।

षड्भिर्होराभिः त्रिशतं क्रोशान् अतिक्रम्य आवां शिमला-नगरं प्राप्तौ। मार्गे एव शीतार्त्तेन मया शीतत्राणायावश्यकानि वस्त्राणि (वासांसि) धृतानि। तद्दिने तु आवां शय्याश्रितौ विश्राममेवाकुर्व।

परेद्युः तत्र पर्यटता मया कोऽपि जलप्रपातः उपागतः। उत्तुङ्गशिखरात् पततोऽस्य महानादो दूरादपि श्रूयते स्म। गभीरनिम्नभूमौ पतित्वा तत्र च कुण्डे एकत्रीभूय सा शीतल-जलधारा त्वरितवेगेन विशाले वनप्रदेशे अदृश्यतां जगाम। प्रपातशब्देन च भीषणं वनमपि पक्षिणां मधुरवैरभिरामसुवर्ण-पुष्पैः च मनोहरं कृतम्। प्रातः देवदारूणां मध्यात् यदा भानुकराः जले पतन्ति तदा तेषां प्रतिबिम्बानि तारागणा इव प्रतिभान्ति। दिवसे तु सा उपत्यका शून्या द्वित्रैः पक्षिभिः एव शब्दिता। कोऽपि पिपासुश्च यदा कदा जलं पिबति।

संध्याया अरुणिमा तां धारां कनकसिंधुम् इव करोति। पुनः च रात्रौ कौमुद्या स प्रपातः राजतपटलम् इव दृश्यते। परं या उपत्यका अस्माकं दिनेऽपि भयङ्करा तत्र पार्वतजनाः निशि अपि हस्ते दात्रं गृहीत्वा पशूनां भक्षणार्थं तृणानि छिन्दन्ति संगृह्णन्ति च। बहुधा गोपो गोपी चोभौ संलपतो मिथो गीतञ्च गायतः। अतिमधुरं तयोः गीतम्। यदा च गोपः वेणुं वादयति गोपिका च तेन सह गायति तदा पथिकाः अपि तं मधुरस्वरं श्रोतुं पथ्येव चलाः तिष्ठन्ति। अहो गीतमाधुर्यस्य आकर्षणम्।

यक्षा—(जाखू)—पर्वतमारुह्य मया तत्रस्थितं देवमन्दिरं दृष्टम्। अत्र प्रतिवर्षम् विजयदशम्या उत्सवो भवति। शिखरमेतत् नगरस्य उत्तुंगतमम् शिखरम् अस्ति। अत्र स्थित्वा सर्वाः हिमाच्छादिताः स्वर्णवर्णाः पर्वतश्रृंखलाः द्रष्टुम् शक्यन्ते। हिमालयस्य अयं पर्वतस्तु कपीनां गृहमेव। नगरस्य सर्वेषां वानराणाम् अधिपतिस्तत्रैव वसतीति श्रूयते।

सप्ताहे अतीते यदाहं गृहे अतिष्ठम् तदाकस्मादेव नीलमेघैराच्छादितं नभः। दिनेऽपि नीहारैः चतस्रो दिशस्तमसि निमग्नाः अहञ्च पुरोवर्तिनः पदार्थानपि द्रष्टुमसमर्थः। तस्मिन् महति नीहारसागरे कस्यापि पक्षिणः कलरवः नाश्रूयत। तस्मिन्नेवान्तरे तुषारकणा धरायामपतन्। कालक्रमेण च हिमपातोऽप्यारभत। तदा तूलपुञ्जैरिव हिमकणैरुत्तुङ्गतरवः लघुगुल्माश्च सर्वे च मार्गाः रमणीयानि भवनानि तथैव च पर्णकुटीराण्यपि शुक्लीकृतानि। हिमपातेन पञ्जाबकेसरिणः लाजपतरायस्य धातुप्रतिमा हिमप्रतिमेवाभाति स्म। हिमपातसमये नातिशीतमबाधत शरीरम्। लोकास्तत्काले भ्रमणायागच्छन् भिन्नमार्गान्। ततो द्वितीये दिवसे यदा उद्यन् भानुर्निजनवरश्मीन् हिमे न्यपातयत्तदा शीतलवायुः द्रुतगत्यावहत् जलीभवत् हिमं च मौक्तिमालेवादीव्यत्। खगकुलानि कोटराणि त्यक्त्वा व्योम्नि यथेच्छम् विहारमकुर्वन्।

मयापि पित्रा सह बहिर्निर्गम्य "चैडविकाख्यं" शिमलानगरे महात्मनो गान्धिनो विश्रामस्थानं दृष्टम्। तत्रगामी मार्गोऽतिशीतलो, द्वित्रेषु स्थानेषु च भानोः कराः कदापि तत्र न पतन्ति। तत्र च जलमपि काचभावमापन्नम्। अधो गत्वाहं कञ्चिज्जल-

प्रपातम् अतिविशालं प्राप्तवान्। तत्स्थानं तु भुजङ्गानाम् गृहमिति तत्र वसद्भ्यो लोकेभ्यः श्रूयते।



पार्श्वे स्थितं कमपि गिरिमारुह्य मया कामनादेव्याः मन्दिरमवलोकितम्। तस्मात् शिखरादधोदिशायाम् वामपार्श्वे नदीव कुटिलो निर्मलश्च मार्गो दक्षिणपार्श्वे च संयानपथः। सर्प इव कुटिलम् संयानं धूमं वमत् प्रतिरवेण चान्दोलनं उत्पादयन्न जाने दिवसे कतिधा गच्छति।

एवं चतुर्दशसु दिनेषु पर्वतस्याभिरामाणि दृश्यानि दृष्ट्वा तत्र च भ्रान्त्वा पित्रा सह दिल्लीनगरं प्रत्यागतः। तत्र भ्रान्त्वा नैसर्गिक-सौन्दर्येण मम मनोभावाः नितरां प्रभाविताः।

१९

# विज्ञानम्

आदिकालादेव विज्ञानेन मनुष्यस्य महती सेवा कृता। अतिप्राचीनकालादेव मनुष्येण प्रकृतेः तत्त्वानि सम्यग् ज्ञातुं प्रयतितं तस्य ज्ञानस्य च प्रयोगः सुखार्थं कृतः। विविधायुध-निर्माणं, धातूनां प्रयोगः, कृषिः, चक्रस्याविष्कारः च विज्ञानस्य प्रथमप्रयोगरूपाणि तत्त्वानि सन्ति। वयं च सगर्वं कथयितुं शक्नुमो यदस्माकं कणादचरकसुश्रुतार्यभटसदृशा वैज्ञानिका अतिप्राचीनकाले विज्ञानक्षेत्रे महतीमुन्नतिं लब्धवन्तः।

अद्य च विज्ञानेन आश्चर्यकराश्चमत्काराः सम्भाविताः। विज्ञानस्य कारणादेव विविधैर्विद्युत्प्रयोगैरस्माकं जीवितमधिकं सुखमयं स्वावलम्बि च सञ्जातम्। वैज्ञानिकैरेव तथाविधानि यन्त्राणि निर्मितानि यैः वयं गृहे स्थिता एव विश्वस्य वार्ताः न केवलं शृणुमोऽपितु चित्रपटे पश्यामः यैश्च वयं स्वल्पेनैव कालेन विना कष्टं भोजनं साधयितुं, वस्त्राणि प्रक्षालयितुम् अन्यान्यपि च बहूनि दैनन्दिनानि कार्याणि कर्तुं समर्थाः। विज्ञानस्यैव फलमेतद् यत् पत्रद्वारा दूरसन्देशद्वारा वा गृहे स्थिता एव दूरस्थस्य प्रियजनस्य वृत्तं जानीमः तेन सह सम्भाषामहे च।

विज्ञानस्यैवायं सुपरिणामो यदद्य संसारः सङ्कुचित इव, दूरान्तराणि नष्टानीव। कतिपयाभिर्होराभिरेव जनः वायुयानेन दिल्लीतः कलिकातां गन्तुं समर्थः। अनेन शान्तिकाले युद्धकाले वा जनवस्तुसञ्चारः सुगमतमः सञ्जातः। अद्य मनुष्यः विज्ञानोत्पादितैः साधनैरेव ग्रहान्तराण्यपि जिगमिषति, गतश्च। चन्द्रतले समानवम् अन्तरिक्षयानावतरणम् आश्चर्यमिव प्रतिभाति। अणुशक्तेः प्रयोगः विज्ञानस्य अति अद्भुतं साफल्यम्। अनेन जीवनस्य प्रत्येकं क्षेत्रे—भोजनार्थम् इन्धनं वा स्यात्, क्वचिद् दूरगमनं वा स्यात् कृषिर्वा स्यात्—सर्वमेव सहेलं साधयितुं शक्यते।

परन्तु एकोऽत्र दोषः। स तु न तथा विज्ञानस्य यथा मनुष्यस्यैव। मनुष्येण अनया विज्ञानोन्नत्या आध्यात्मिकं सर्वं विस्मृतं तस्य च मानसिकी शान्तिर्विलुप्ता। जीवने इयती त्वरा दृश्यते यत् नरः कुत्रापि कदापि निश्चिन्तः शान्तो वा न तिष्ठति। अपरं च विज्ञानेन भीषणानि संहारकाणि प्रक्षेपास्त्राणि निर्मितानि येषां प्रहारेण सम्पूर्णदेशा एव युगपद् नाशयितुं शक्यन्ते अनेकेषां निर्दोषजनानां च तेन प्राणहानिः स्यात्। विज्ञानस्य यन्त्रैर्मनुष्योऽपि यन्त्रवत् संवृत्तः, तस्माद् हृदयं निष्कासितमिव। अद्य वयं पश्यामो यत् विज्ञानशिखरमारूढे अमेरिकादेशे जनाः शान्तिं कामयमानाः इतस्ततः भ्रमन्ति। विज्ञानं खलु ईश्वरस्योत्तम उपहारो मानवाय, परन्तु स एव दुष्प्रयुक्तोऽतिप्रयुक्तो वा घातको जायते।

२०

# दूरदर्शनम्

दूरदर्शनयन्त्रं हि आधुनिकविज्ञानस्य आश्चर्यंकरः चमत्कारः अस्ति। आश्चर्यमिव जनः अत्र क्वचिदप्युपविश्य दूरस्थानि चित्राणि स्वनेत्रयोः पुरतः तथैव पश्यति तथैव च शृणोति चित्रगतानां जनानां वचांसि यथा महाभारते संजयेन दिव्य-दृष्टया सर्वं युद्धं दृष्ट्वा धृतराष्ट्राय समकालमेव वर्णितम्। अयं हि विद्युत्तरङ्गाणां चमत्कारः। अस्य च आविष्कारको मूलरूपेण नियकाऊमहोदयो मन्यते। बेयर्ड-फार्न्सवर्थ-ज्वोरि-किननामकैः वैज्ञानिकैः पुनः एतद् वर्तमानरूपं प्रापितम्।

क्रमवीक्षणपद्धत्या किरणपुञ्जैः विशिष्टरूपित्रैः दूरदर्शन-प्रेषकयन्त्रैश्चित्राणि आकाशे विद्युत्तरङ्गमाध्यमेन प्रेष्यन्ते तानि च संग्राहियन्त्रैः गृहीत्वा चित्रपटे प्रदर्श्यन्ते। अद्य शिक्षाज्ञान-संस्कृतिराजनीतिकलादिक्षेत्रेषु अस्य यन्त्रस्य महदुपयोगित्वम्। कामं जनः पुस्तकं पठित्वा वा भाषणादिकं श्रुत्वा वा विविधं ज्ञानमाप्नोति, परन्तु सजीवचित्रज्ञानं जनमनधीतविद्यमपि महतोऽर्थान् बोधयितुं सम्यग् आत्मसात् कारयितुं च प्रभवति। गृहे एव उपविष्टो जनः दूरदेशेषु किं भवति इति तत्क्षणमेव

दूरदर्शनपटे सश्रवणं द्रष्टुं शक्नोति। मनोरमाणि नृत्यानि, रसमयानि रूपकाणि, प्रियनेतॄणां वृत्तं चेत्येतत् सर्वं जनसम्मर्दं परिहृत्य एकान्ते गृहे सुखासीनो जनः वीक्षितुं पारयति। अस्य माध्यमेन शासनं वा अन्यद्वा तन्त्रं स्वविचारान् दूरतरम् विशालतरजनसमूहं प्रति च प्रचारयितुं क्षमम्। छात्रा अपि दूरदर्शनद्वारा सचित्रमध्यापिताः स्वचक्षुषा पश्यन्त इव सम्यग् अवबुध्यन्ते विविधान् विषयान्।

परन्तु प्रत्येकं शुभपदार्थस्येवास्यापि केचन दोषाः अवलोक्यन्ते। प्रथमं तावदस्माभिः 'अति सर्वत्र वर्जयेत्' इति नियमः स्मर्तव्यः एव। दूरदर्शने चित्राणामतिशयितं वीक्षणं नेत्राभ्यां हानिकारकं ज्योतिरपहारकं च परिणमति विशेषतश्च बालानाम्। अन्यच्च सर्वविधैर्जनैः कुटुम्बे वीक्षणार्हाणि वा अवीक्षणार्हाणि वा उभयविधानि चित्राणि दृश्यन्ते, तेषु चानपेक्षितानि दृष्ट्वा चित्तं सदाचारस्य प्रतिकूलतां याति। दीर्घकार्यक्रमैश्च समयोऽपि नश्यति छात्राणाम्। अस्मद्देशीयं वायुमण्डलं च दृष्ट्वा बहुकालं गृहम् प्रविश्योपवेशनं न चाल्पमपि भ्रमणं स्वास्थ्यविरुद्धं ननु। दूरदर्शनेन पुनः सामाजिकता विच्छिन्ना व्यक्तिकेन्द्रिता च काचित् संस्कृतिः समुदेति यस्या अनुसारेणास्माकमन्योन्यसम्भाषणं वा मेलनं वा न्यूनतां याति समाजश्च विच्छिद्यते। नैतत् सामाजिकमनुष्याय शुभं चिह्नं, व्यक्तित्वकलाया ह्रासस्याप्येतत् महत् कारणम्। तथापि सावधानं प्रयुज्यमानमेतत् यन्त्रं महते खलूपकाराय कल्पते।

२१

# विद्या

अस्माकं साहित्ये विद्याया महान् महिमा श्रूयते। विद्या एव मनुष्यस्य पार्श्वे ईदृशं तत्त्वं येन तस्मिन् वैशिष्ट्यं सम्पद्यते, स च पशुभिर्भिन्नः पृथगेव दृश्यते। यदा शिशुः जायते, तदा सः पशुतुल्य एव भवति, किन्तु पश्चात् विद्यया तस्य द्वितीयं जन्म इव भवति। तदा सः अधिकतरं शोभते। येषां विद्या न भवति ते वस्त्राभूषणालङ्कृता अपि सभामध्ये मूर्खताकारणात् न शोभन्ते, ये पुनः विद्यावन्तो भवन्ति, ते सर्वत्र शोभन्ते, पूज्यन्ते, सम्मान्यन्ते च। अत एवोच्यते—स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते। राज्ञः मानः धनैश्वर्यकारणात् केवलं स्वराज्ये भवति परन्तु विद्वत्तायाः सर्वत्र सम्मानः भवति। यदि कश्चिद् राजा विद्वांसं स्वदेशात् निष्कासयति, तथापि सः देशान्तरं गत्वा स्वविद्वत्तया ख्यातिं लभते।

अस्मिन् संसारे मनुष्यः विद्ययैव सभ्यं वाग्व्यवहारं जानाति। वाक्चातुर्येण सः सर्वेषां मनांसि जेतुं समर्थोऽस्ति। विद्यैव तादृशं धनं यत् केनापि चोरयितुं न शक्यते। अस्य धनस्य तु प्रवृत्तिः विपरीता एव। अन्यधनस्य तु दानेन क्षयो भवति परन्तु विद्या-

रूपस्य धनस्य दानेन वृद्धिः भवति। यदि वयमन्यमध्यापयामस्तदा ऽस्माकं ज्ञानं वर्धते एव। संकटकालेऽपि विद्या नरं रक्षति। विद्यया मनुष्यः संसारस्य वास्तविकं तत्त्वं जानाति महान्ति कष्टानि च हसन्नेव सहते। विद्यैवास्माकं मित्रम्। वयं कुत्रापि स्याम, अन्यः कश्चिदस्मान् न जानीयात्, परन्तु स्वविद्यया ऽस्माकं कालः गच्छति, अस्माकं विद्यया प्रभाविताश्चान्येऽप्यस्माकं मित्राणि भवन्ति। मनुष्यः विद्ययैव चिन्ताक्षणेष्वपि शान्तिं लभते। विद्या मनुष्ये धैर्यं सञ्चारयति, सा तस्य हृदये अहिंसास्तेयत्यागादिभावान् जनयति येन सः स्वार्थं त्यक्त्वा जनहितमपि वितनोति। विद्यावन्त एव जना नेतारो भवन्ति, अन्येभ्यः साधुमार्गं प्रदर्शयन्ति। भर्तृहरिणा एकस्मिन् पद्ये विद्याया व्यापकं महत्त्वमेवं वर्ण्यते—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशस्सुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः॥

अतः यदि मनुष्यः समाजोत्कर्षम् आत्मोत्कर्षं च वाञ्छति, तदा तेन विद्योपार्जनमवश्यमेव कर्तव्यम्। विद्ययैव शान्तिपूर्वकं सम्मानपूर्वकं च जीवितुं शक्नोति जनः।

२२

# ग्रामोन्नतिः

ग्रामा हि भारतस्य प्राणाः। अधिसंख्या जनताऽत्र ग्रामेष्वेव निवसति। भारतं कृषिप्रधानो देशः, अतएव बहुलतया जनानां जीवितमत्र ग्रामाश्रितमेव। सर्वाणि खाद्यान्नानि, विविधानि तैलबीजानि, शंणकार्पासादिकं वस्त्रसाधनं सर्वमेतत् कृषिद्वारा ग्रामेभ्य एवोपलभ्यते। अपरिष्कृतवस्तुप्रदानेन देशस्य महतीनां निर्माणीनाम् आधारभूता इमे ग्रामा एव। ग्रामेष्वेव भारतीय-संस्कृतेरव्याजं मौलिकं रूपं दृश्यते। अतः साधूक्तं गान्धिमहात्मना यत् ग्रामोन्नत्यैव भारतस्योन्नतिः सम्भाव्यते नान्यथा। कतिपयेष्वेव नगरेषु योन्नतिः दृश्यते सा तु केवलं भारतीय-जनानां प्रतिशतम् दशानामेवेति वक्तुं शक्यते।

दौर्भाग्यमेतद् यद् गतेष्वपि अष्टत्रिंशति वर्षेषु स्वातन्त्र्योपलब्धेः, अद्यापि भारतीयग्रामा अविकसिताः अज्ञानान्धकार-निमग्नाः दरिद्राः, यत् सत्यं सर्वथा विकासमार्गस्य आद्ये एव चरणे स्थिता दृश्यन्ते। असन्दिग्धमेतद् यत् केषुचित् प्रदेशेषु ग्रामेषु विद्युत् प्रापिता। परन्तु तत्र बहुधा पेयजलं सुलभं नास्ति, मार्गाः न निर्मिता अथवा सम्यक् न निर्मिताः, पाठशालाश्चिकित्सा-

शालाश्च अत्यल्पा एव । मार्गेषु समीचीना प्रकाशव्यवस्था नास्ति, न च सन्ति यातायातसाधनानि सुलभानि, येन समयस्य महान् नाशो भवति । ग्रामीणाः प्रायः अशिक्षिताः सन्ति । अतएव अज्ञानकारणात् ते रोगग्रस्ताः भवन्ति स्वच्छतायाः ध्यानं न कुर्वन्ति, दुर्व्यसनपतितानां तेषां द्यूतमदिराधूमपानादिकारणात् न केवलं समयहानिर्भवति, अपितु परस्परं कलहा जायन्ते यैः भूयो धनं न्यायाधिकरणेषु व्ययीभवति । अस्माकं शिक्षायां कश्चिदेवंविधो दोषोऽस्ति येन ग्रामस्य शिक्षिता जना अपि ग्रामविमुखा भवन्ति पुनश्च ग्रामास्तेषां शिक्षालाभेन वञ्चितास्तिष्ठन्ति । शिक्षायामन्यत्र सर्वत्र च स्वभाषाप्रयोगः ग्रामोत्थानाय आवश्यकः ।

अस्माकम् शिक्षा तादृशी स्यात् यथा ग्रामेभ्यः पलायनम् तदुपेक्षा च अवरुध्येत । तादृशी स्यादस्मदीयाऽर्थव्यवस्था यथा ग्रामेषु अधिकाधिका लघूद्योगा वा बृहदुद्योगा वा स्थाप्येरन् येन ग्रामजनानां समृद्धिः स्यात् । ते शिक्षिता भूत्वा स्वयमेव समस्याः समाधातुं शक्नुयुः, तेन हि तत्र स्वच्छता भविष्यति न च भविष्यति समयहानिः । अद्य राजकीयसेवाधीनोऽपि कश्चिद् ग्रामं गन्तुं नेच्छति, यतस्तत्र सुखं जीवनमेव दुष्करम् । पेयजलविद्युन्मार्गादीनां व्यवस्थया जनानां ग्रामविमुखीभावः समाप्तिं यास्यति, तदैव च भारतीयग्रामा अपि देशस्य प्रगत्यां सहभागिनो भूत्वा सुखमनुभविष्यन्ति, भारतं च समृद्धं राष्ट्रं भविष्यति । ग्रामोन्नत्या हि वास्तविकी भारतोन्नतिः ।

## २३

# छात्रजीवनम्

छात्रकालः मनुष्यजीवनस्य सुवर्णमयः कालः। अस्माकं पुरातनग्रन्थेषु अस्य ईदृशं महत्त्वं यत् अनेन मनुष्यस्य द्वितीयं जन्म मन्यते, स च द्विजः उच्यते। वस्तुतः छात्रजीवनं मनुष्यस्य द्वितीयं जन्म एव विद्यते। यदा मनुष्यः जायते, तदा सः पशुतुल्यः एव भवति, केवलं खादितुं पातुं स्वपितुं च जानाति। परन्तु छात्रजीवने एव सः ज्ञानं लभते, परेषां दुःखम् अवबोद्धुं, धर्मस्य तत्त्वं ज्ञातुं, परमशक्तिविषये अनुभवितुं, महापुरुषाणां विचारान् पठितुं, सम्यग् आचरितुं च अवसरं लभते। प्राचीनकाले छात्रजीवनं ब्रह्मचर्यम् उच्यते स्म। ब्रह्मचारी तपोमयं जीवनं कठोरं व्रतं च आचर्य सरलभावेन केवलं ज्ञानोपार्जने संलग्नोऽभवत्। अनेन तपसा ज्ञानेन च भाविजीवने सः कष्टानि सोढुं समर्थोऽभवत्। ज्ञानस्य, विद्यायाः तपसः, दानादिधर्मस्य च विशिष्टं महत्त्वमस्ति मनुष्यजीवने, अन्यथा मनुष्यः पशुतुल्यो भवति। उक्तं हि—

येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः।
ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति॥

अतएव छात्रैरस्य सुवर्णावसरस्य सदुपयोगः कर्तव्यो न च

नाशयितव्यः कालः। यद्यस्मिन् काले छात्राः संयमेन, तपसा, परिश्रमेण नियमपूर्वकं कार्यं कुर्वन्ति, सत्यमाचरन्ति, गुरूणामादरं कुर्वन्ति, आलस्यं च त्यजन्ति तदा सकले जीवने ते कदापि विफला न भविष्यन्ति। नायं कालः सुखमुपभोक्तुम्। केवलं सुखमिच्छता परिश्रमेण विना विद्या न लभ्यते सर्वविधो विकासश्च न भवति। अत एवोच्यते—

सुखार्थी चेत्त्यजेद्विद्यां विद्यार्थी चेत्त्यजेत् सुखम्।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम्॥

भाविजीवने सुखार्थमेव छात्रजीवने परिश्रमः क्रियते। छात्रैः नियमितं भोजनं भक्षणीयम्, नियतं च व्यायामेन शरीरं पोषणीयम्, आलस्यं त्यक्त्वा ऽध्ययनं कर्तव्यम्। तेन शोभनविचारमयानि पुस्तकानि पठितव्यानि, शोभनविचारमयानि नाटकानि चित्राणि च द्रष्टव्यानि, शोभनविचारमयानि गीतानि श्रोतव्यानि गातव्यानि च। अनेन चित्तशुद्धिर्भवति चित्तं च कार्यात् न विचलति।

## २४

## परिश्रमः

सत्यमाह कविः—

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥ इति

जन्मना कश्चित् कीदृशोऽपि महान् स्यात् परन्तु, यदि सः सर्वाणि कर्याणि परित्यज्य केवलमालस्यपरिगृहीत एव यापयति दिनानि, तदा स उन्नतिं नाप्नोति। तेन यत् पूर्वजेभ्यः प्राप्तं तदपि शनैः-शनैः नश्यति। वनराजो मृगराजोऽपि यदि उद्यमं विहाय वने तिष्ठेत्, तर्हि अयमस्माकं राजेति विचार्य स्वयमेव कश्चित् पशुः तस्य मुखग्रासो भवितुं नार्हति। अत एवोच्यते 'न परिश्रमसमो बन्धुर्न चालस्यसमो रिपुः' इति। एतदाभाणकं शतशः सत्यमस्ति। यदि अस्माकं सर्वे बन्धवो वियुज्येरन्, पराङ्मुखा वा भवेयुः न कश्चित् साहाय्यं कुर्यात्, तदापि यदि परिश्रमं न वयं त्यजामस्तर्हि न केवलं लुप्तं धनं यशो वा प्राप्तुं समर्था अपितु नवमधिकं च धनं यशश्चार्जयितुं समर्थाः। मृत्पिण्डबुद्धिना बोपदेवेनापि परिश्रमद्वारैव महती विद्योपार्जिता, विद्वान् वैयाकरणोऽसौ जातः सम्मानितश्च लोके। ये पुनः

विभववन्तो जनास्ते हि बन्धुबान्धवयुता अपि यदि आलस्यपरिगृहीताः स्युः तदा सर्वस्तेषां विभवः पश्यतामेव नश्यति। किं वाऽभूत् आलस्यमूर्तेरग्निवर्णस्य ? तस्य इक्ष्वाकुवंशागतं राज्यं परैरपहृतमालस्यकारणादेव। आलस्यकारणादेव च परवर्तिशासकैर्भारते मुगलसाम्राज्यमवपातितम्। परिश्रमेण पुनः अत्यल्पैरङ्गुलिगण्यैरपि आङ्ग्लैः निखिलविश्वे साम्राज्यं स्थापितम्। सर्वस्य इतिहासस्य कथैव परिश्रमकथा इति शक्यते वक्तुम्। न चेदभविष्यत् परिश्रमो गान्धितिलकसुभाषसदृशानां नेतॄणां कथमभविष्यत् भारतं स्वतन्त्रम्! विद्यार्थिभिरपि सोद्यमैरेव न केवलं परीक्षायामपितु सकलजीवने एव साफल्यमधिगम्यते। प्रकृत्यामपि परिश्रमस्योदाहरणानि दृश्यन्ते। लघुपक्षिणोऽपि परिश्रमेण नीडानि निर्माय वर्षाकाले शीतकाले च सुखं वसन्ति। अतिलघ्वी पिपीलिका सर्वदा परिश्रमनिरता दृश्यते न सा कदापि विश्राम्यति। सा च सर्वेषु कालेषु बिलेषु सुखं निभृता सती संगृहीतमन्नं भुङ्क्ते न च क्षयं याति। अत एव साधूक्तं केनचित् कविना—'आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः' इति। वेदेषु प्रोच्यते—कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः इति। यः सपरिश्रमं कार्यं करोति स एव जयति। तथैवोच्यते—इन्द्र इच्चरतः सखा इति। यो जनः चरति कार्यं वा करोति तमेव परमेश्वरः कामयते। परिश्रमेण श्रान्तेन जनेनैव लक्ष्मीः प्राप्यते इति 'नानाश्रान्ताय श्रीरस्ति' इत्यस्मिन् आभाणके उक्तं भवति। तथैव चाह ऋषिः—न ऋते श्रान्तस्य सख्याय देवाः इति। परमेश्वरोऽपि तस्य साहाय्यं करोति यः स्वयं परिश्रमशीलः स्यात्। सर्वेषु क्षेत्रेषु परिश्रमः आवश्यकः। परिश्रमशीलो जनः किमपि कार्यं गर्हितं न मन्यते। तस्य तु परिश्रमे एव निष्ठा च प्रतिष्ठा च।

## २५

# क्रीडनम्

क्रीडनं हि मनुष्यस्य स्वाभाविकी प्रवृत्तिः। आ जन्मनः एव शिशुः स्वभावतः एकाकी अपि क्रीडत्येव। क्रीडनेन तस्य मूलप्रवृत्तीनां न केवलं प्रकाशो भवति, अपितु विकासोऽपि भवति। मनोवैज्ञानिकैर्ज्ञानोपार्जनहेतोरपि क्रीडनस्य महत्त्वं स्वीक्रियते। यथा कश्चिद् बालो यदि वस्तूनां व्यवस्थां विकृत्य पुनरपि तानि व्यवस्थापयति, तर्हि वस्तुव्यवस्थापनज्ञानम् उपार्जयति। अत एवाधुनिकशिक्षापद्धतौ क्रीडनाय अवश्यमेव समयो निर्धार्यते मान्तेसरीशिक्षाप्रणाल्यां तु क्रीडनसाधनैरेव शिशवः शिक्ष्यन्ते। ते एकाकिनो वा समेत्य वा क्रीडन्तो मस्तिष्कविकासमाप्नुवन्ति। एवं तेभ्यः शिक्षा भाररूपा न भवति। विद्यालयानामपि दैनन्दिने कार्यक्रमे क्रीडनार्थं कालो निर्धार्यते। अनेन निरन्तराध्ययनजन्यं बुद्धिभारमपाकृत्य मनोरञ्जनं लब्ध्वा पुनर्नवीकृता इव बाला नवेनोत्साहेन अध्ययने प्रवर्तन्ते। क्रीडनस्यान्योऽपि महान् लाभो, यदनेन व्यायामो भवति अङ्गानि च स्वस्थानि भूत्वा विकासमाप्नुवन्ति। सामूहिकैः क्रीडनैः बालेषु सहयोगभावो वर्धते, अयमेव

च सहयोगी राष्ट्रहितार्थं कल्पते। एकस्य दलस्य क्रीडकाः स्वदलविजयार्थं प्राणपणेनापि प्रयतन्ते। उचितनिर्णयशिक्षापि क्रीडनेषु प्राप्यते। क्रीडाकाले शारीरिकबलेन सार्धं बुद्धिचातुर्यमप्यपेक्ष्यते। बुद्धिशरीरयोः युगपत् सञ्चालनं क्रीडनेन सहजं शिक्षते जनः। बहुषु क्रीडनेषु शरीरबलं नापेक्ष्यते। तानि क्रीडनानि आभ्यन्तरक्रीडनान्यभिधीयन्ते। तैः जनस्य बुद्धिविकासो भवति, चिन्तनशक्तिः स्वतन्त्रनिर्णयशक्तिश्च वर्धते।

अत्रेदमवधेयं यत् सत्स्वपि बहुषु क्रीडनलाभेषु जनेन केवलं क्रीडनतत्परेण न भवितव्यम्। यथा सर्वंकालमध्ययनं हानिकरं भवति तथैव सर्वकालं क्रीडनमपि हानिकरमस्ति। सन्तुलितंरूपेण अध्ययनेन साकं क्रीडनमावश्यकम्। ततश्च समयं विभज्य क्रीडाकाले क्रीडैव स्यात् अध्ययनकाले चाध्ययनमेव। तेन हि जनस्य सर्वाङ्गीणो विकासो भवति। अथ च यदि कश्चित् क्रीडनं व्यवसायरूपेण जीवनवृत्तिरूपेण वा स्वीकुर्यात् तदापि अध्ययनं विना केवलं क्रीडनं महते लाभाय न कल्पते। क्रीडनस्य पुनरस्ति विशिष्टः आचारः। क्रीडनरतेन द्वेषभावं विहाय सहयोगभावेन क्रीडितव्यम्। तदर्थं च महती सहनशीलता अपेक्ष्यते। नावाप्यते सिद्धिः परिश्रमं विना। क्रीडनधर्मेण वयं जानीमो यत् पुनः पुनरभ्यासेन मनुष्यः किमपि ज्ञानमाप्तुं किमपि च कर्म कर्तुं शक्नोति।

२६

# अनुशासनम्

अनुशासनम्, व्यवस्थाया नियमस्य च नामान्तरम् अस्ति। सर्वस्मिन् जगति वयं नियमं प्रकृतेरनुशासनं वा पश्यामः। अतः एव वैदिकमन्त्रे उच्यते 'सत्यं बृहदृतमुग्रं दीक्षा तपः...पृथिवीं धारयन्ति' इति। यानि तत्त्वानि पृथिवीं धारयन्ति तेषु ऋतस्य नियमस्यानुशासनस्य वा महत्त्वपूर्णं स्थानमस्ति। सूर्यः नियमतः उदेति, नियमतश्चास्तमेति, नियमतः एव ऋतवो भवन्ति, नियमत एव ग्रहनक्षत्राणि निश्चिते मार्गे परिभ्रमन्ति, नो चेत् सर्वत्र महान् विप्लवः स्यात्। विचार्यतां यदि स्वेच्छया रविरपि कदाचित् प्रकाशेत न वा प्रकाशेत, यदि वा नद्यः स्वेच्छया जलं वहन्तु न वा वहन्तु तदा किं भवेत्। कदाचिद् यदि बहुषु वर्षेषु एकदापि अतिवृष्टिरनावृष्टिर्वा भवति तदा जनानां कष्टानि असह्यानि जायन्ते, यदि पुनः कश्चिदपि क्रमः कदापि न स्यात् तर्हि का दशा जायेत इति सुखम् अनुमातुं शक्यते।

एवमेव व्यक्तेः समाजस्य च जीवने ऽपि अनुशासनस्य अद्वितीयं महत्त्वं वर्तते। साफल्याय उन्नतये च अनुशासनम् अनिवार्यं भवति। यदि अस्माकं जीवने को ऽपि नियमो न

स्यात् तदा वास्तविकी उन्नतिः शान्तिश्च न लभ्यते । कश्चित् जनः केवलं धनं कामयमानः रात्रौ वा दिवा वा न कदापि स्वपिति तदा किं धनेन सः सुखी भवति ? तथैव यदि समाजे सर्वे जनाः केवलं धनसंग्रहतत्पराः स्युस्तदा कथं चलेत् जीवनयात्रा । सर्वत्र हि तदा धनार्थं संघर्षः परस्परं घातप्रतिघाताश्च स्युः । आरक्षका अपि यदि नियमं नानुतिष्ठेयुः तदा चौराः स्वतन्त्रा भूत्वा स्वकार्यं विदध्युः । प्रत्येकं सैनिकः प्रतिपदं यदि साकं चलति, अन्योन्यसम्बद्धः च भवति, तदैव जीयन्ते युद्धानि। अनुशासनविहीना सेना शस्त्रास्त्रसंयुता अपि असम्बद्धजनसम्मर्द इव न कदापि विजयते, आत्मानमेव सा हन्ति । विद्यालयेऽपि यदि कश्चिद् नियमो न स्यात्, यदि कोऽप्यध्यापकः कामपि कक्षां कदापि कमपि विषयमध्यापयेत् स्वैरं तदा कश्चिदपि छात्रः किमप्यवगन्तुं न शक्नुयात् । अत एव समयविभागः क्रियते नियमपूर्वकं च अध्याप्यते येन सर्वेषां लाभः स्यात् । नियमत एव हि रेलयानानि चाल्यन्ते, अन्यथा प्रत्यहं संघट्टनदुर्घटनाः स्युः। अस्माकं शरीरेऽपि प्रकृत्या सर्वाण्यंगानि नियमपूर्वकं कर्म कार्यन्ते । चिन्त्यतां यदि क्षणमपि हृदयं स्वप्यात् तदा शरीरस्य का ऽवस्था भवेत् । समाजे ऽपि यस्य यत् कार्यं निर्धारितं तत् तेनैव कार्यं नो इतरेण । क्रीडायां प्रत्येकं क्रीडकस्य स्थानं निश्चितं भवति, यदि पुनरसौ स्वस्थानं परित्यज्य अन्यत् कुरुते, तदा प्रतिस्पर्धायां विजयो नावाप्यते ।

अत एव समाजस्य, राष्ट्रस्य, स्वस्य चोन्नत्य अनुशासनपूर्वकं वर्तितव्यम् । वयं पश्यामो यत् अनुशासनकारणादेव अंगुलिगण्यैरपि आंग्लैः संसारे साम्राज्यं स्थापितम् । अनुशासनेनैव जापानसदृशम् लघु अपि राष्ट्रं महायुद्धविध्वंसं सोढ्वापि पुनः परमोत्कर्षशिखरमारूढम् ।

२७

# सदाचारः

सतां सज्जनानां वा आचारः सदाचारः इति कथ्यते। येन विधिना सज्जनाः संसारे, कुटुम्बे अन्यैः जनैः सह आचरन्ति व्यवहरन्ति वा स एव सदाचारः। आचारस्य भूयान् महिमा। आचरणेनैव मनुष्यस्य चरित्रं ज्ञायते। यः शोभनम् आचरति स एव सज्जनः, यः दुष्टम् आचरति स एव समाजे दुर्जनः इति अभिधीयते। अस्माकं शास्त्रैरपि 'आचारः परमो धर्मः' इति उद्घुष्यते। वस्तुतः, धर्मश्च आचारश्च एकमेव तत्त्वम् अस्ति। यानि धर्मस्य तत्त्वानि, तानि सर्वाण्याचारे समाधीयन्ते। सदाचारवान् जनः सर्वैः सह स्नेहेन मैत्रीभावेन च व्यवहरति। कमपि जनमापन्नं क्षुधार्तं वा दृष्ट्वा तस्य हृदयं द्रवीभवति स च तस्य साहाय्यं विदधाति। तस्यार्थाय कष्टं सोढ्वाऽपि प्राणपणेनापि सः प्रयतते। एतादृशो जनो न कदापि चौर्यमाचरति यतो ह्यनेन अन्यस्य हानिः भवति, न चासत्यं भाषते यतो ह्यसत्यभाषणेनापि अपरस्य अहितमेव भवति। मनुष्याः स्वार्थपरवशतयाऽसत्यं भाषमाणा धनसम्पत्ती चार्जयन्तो दृश्यन्ते, परन्तु अनेन निखिलः समाजो दुष्यति परस्परं च अविश्वासो जायते। सदाचारवान्

नरः अकर्मण्यो न तिष्ठति, सः आलस्यं विहाय कर्मणि तत्परः दृश्यते। एतादृशस्य जनस्य सर्वाणि कर्माणि स्वार्थवृत्तिरहितानि परमात्मने राष्ट्राय वा समर्पितानि भवन्ति। जनहितं बन्धुहितं च तस्य दृष्टौ प्रमुखतां भजतः।

आचारविहीनस्य जनस्य समाजे क्वचिदपि स्थानं न वर्तते। सः यद्यपि प्रभुत्वकारणाद् वा धनकारणाद् वा कालविशेषे वा सम्मानितः स्यात्, परन्तु आचाराभावात् जनाः सर्वदा सर्वकालेषु च तं न सम्मानयन्ति, न च तस्मिन् विश्वसन्ति। परमात्मोपलब्धये, भक्तये, स्वसुखशान्तिभ्यां च अपि मनुष्येण अवश्यमेव सदाचारिणा भाव्यम्। नारायणोऽपि नरान् प्रति निष्कपटस्निग्धसत्यव्यवहारेणैव प्रसीदति। इयं च लोकविश्रुता कथा यत् यदा वाल्मीकिना दस्युप्रवृत्तिः परित्यक्ता, केवलं तदैवासौ भगवद्भक्तौ आसक्तोऽभवत्, तदैव च तेन रामायणसदृशम् अमरकाव्यं विरचितम्। अतः आत्मोत्कर्षाय समाजोत्कर्षाय परमशान्त्युपलब्धये च सदाचारः परमावश्यकः। यो जनः सदाचारपथे वर्तते, तस्य मनसि न मनागपि भयमस्ति, भौतिकसुखमप्राप्यापि तस्य मानसिकं सुखम् अपरिमितं विद्यते।

## २८

# सत्यम्

भगवता मनुना धर्मस्य यानि दश लक्षणानि प्रोक्तानि तेषु सत्यम् अन्यतमम् अस्ति। वेदेऽपि वारं वारं सत्यस्य प्रशंसा क्रियते। तत्र प्रतिज्ञा विद्यते "इदमहमनृतात् सत्यमुपैमि"। मनुष्येण असत्यं त्यक्त्वा सत्यमेव वक्तव्यम्। सत्यवादी केवलमीश्वराद् बिभेति, अतः सोऽन्यस्मात् कस्मादपि जनात् न बिभेति।

यथा श्रुतं, यथा दृष्टं यथा पठितं, यथा च मनसि विचारितं तथैव भाषणं सत्यनाम्नाऽभिधीयते। धर्मस्य मूलं सत्यं वदन्ति। यो जनः सत्यं वदति तस्य मनसि कपटं लोभो वा न जायते। सः स्वार्थवशाद् अनुचितानि कार्याणि न करोति।

अस्माकं देशे बहूनां सत्यवादिनां कथाः प्रचलिताः। सत्यकामः जाबालः यदा गुरोः पार्श्वे विद्यां प्राप्तुं गतस्तदा गुरुः अपृच्छत् त्वं कः असि। तदा तेन सत्यमुक्तं यत् मम मातुः नाम जाबालाऽस्ति, अहं पितुः नाम न जानामि, तदा आचार्यः प्रसन्नः भूत्वा तम् अध्यापयत्। सत्यवादिनो राज्ञः हरिश्चन्द्रस्य नाम को न जानाति। तेन सत्यार्थं प्राणानामपि चिन्ता न कृता।

भारतस्य राष्ट्रचिह्ने "सत्यमेव जयते" इति वाक्यं लिखितमस्ति। अस्माकं संविधाननिर्मातृभिः सत्यस्य महिमा स्वीकृतः। महाभारतयुद्धे पाण्डवानां, रामायणे च रामस्य विजयस्य कारणं सत्यमेव विद्यते।

अत्र सत्यस्य अर्थः सन्मार्गः, धर्ममार्गो न्यायमार्गो वाऽस्ति। सर्वेषां हितं, त्यागः, न्यायपूर्णम् आचरणं च सत्यमार्गः कथ्यते। दुर्योधनेन रावणेन च अयं मार्गो न गृहीतः अतः तौ विनष्टौ। अत एवोच्यते "यतो धर्मस्ततो जयः"। सत्यमेव धर्मः अस्ति, उक्तं हि ब्राह्मणग्रन्थे—यो वै धर्मः सत्यं वै तत्। शिक्षासमाप्तौ आचार्यः शिष्यं सर्वप्रथमं सत्यं धर्मं च आचरितुम् उपदिशति—"सत्यं वद, धर्मं चर" इति।

इयं सकला भूमिः केषाञ्चन सज्जनानां सत्यव्यवहारे एव आश्रिता। यदि सर्वे धूर्ताः, असत्यवादिनः, दुर्जनाः भवेयुः तदा शीघ्रमेव इयं नश्येत्। अस्माभिः सर्वदा सत्यमेवाचरणीयं येन मनसि सुखं सर्वेषां कल्याणं च स्यात्। सत्यस्य परिणतिः सत्कार्ये सद्व्यवहारे च भवति।

२९

## सत्सङ्गतिः

संसारे सम्पर्कस्य सङ्गतेश्च प्रभावः सर्वत्र लक्ष्यते। तान्येव वस्तूनि अन्धकारसम्पर्केण विलुप्यन्ते, तान्येव च पुनः सूर्यप्रकाशेन दिने विद्योतन्ते। यदि कश्चित् कृष्णमङ्गारं स्पृशति तर्हि तस्य हस्तौ वा वस्त्राणि वा मलिनीभवन्ति, चन्दनस्पर्शेन पुनः तस्य शरीरे सुगन्धः प्रसरति। वयं पश्यामो यदग्निसंसर्गेण कृष्णोऽपि लोहः सन्तप्तः रक्ताभो भवति, तेन च तदा लोहकारो विविधानि जनोपयोगीनि वस्तूनि निर्मातुं शक्नोति। तथैव मनुष्योऽपि सज्जनैः सह संसर्गेण सज्जनः, दुर्जनैः सह च दुर्जनो जायते। अत एव कविनोक्तं 'संसर्गजा दोषगुणा भवन्ति' इति। येनापि साकमस्माकं सम्बन्धो भवति तस्य दोषा गुणाश्चास्मानवश्यमेव प्रभावयन्ति। अयं प्रभावो बालेषु सविशेषं दृश्यते, अपरिपक्वा मृदुला हि तेषां बुद्धिर्भवति। यदि कश्चिद् बालः मिथ्या वदति चौर्यं च आचरति तदा तेन सह वर्तमानः अन्यो बालोऽपि तस्य कार्याणां लाभैराकृष्टः तत् सर्वं कर्तुं प्रवर्तते, अन्ते च दुःखितो जायते। इतरः पुनः परिश्रमिणा, सत्यवादिना बालेन सह वर्तमानो बालस्तस्य गुणान् गृह्णाति, जीवने च साफल्यं समाजे

च सम्मानं लभते । प्रकृतेरयं नियमः । किं वयं पुष्पितां वाटिकां गत्वा दृष्टिं विलोभयन्तो मनसि आह्लादं नानुभवामः ? अवस्कर-राशिं मलं वा दृष्ट्वा किमस्माकं मनो म्लानं न भवति ? पुस्तकानि, चित्राणि, नाटकानि, गीतान्यपि च सङ्गतेः साधनानि सन्ति । ये महापुरुषा अद्य न जीविताः, तैः सह सङ्गतिरपि तेषां पुस्तकैः कथाभिः, चित्रैः नाटकादिभिश्च लभ्यते । रामकृष्णबुद्ध-गान्धिमहात्मनां चरित्रैः कस्य न जीवनम् उदात्तं भवति ? सत्सङ्गत्या मनुष्यः कष्टानि सोढुम् प्रभवति । सज्जनः सहवर्तिनो जनस्य मनसः कुविचारान् दूरीकरोति, तस्य बुद्धिं च प्रसादयति । सः स्वार्थभावेन विना हितं करोति । स्वभावत एव सज्जनैः सह वर्तमानो जनः तेषां सत्यादिगुणान् लभते । आपत्काले ते सज्जनाः मित्राणि त्यक्त्वा न पलायन्ते, अपितु सर्वथा साहाय्यं कुर्वन्ति । यदा सज्जनानां मानो भवति तदा तेषां सहवर्तिनामपि मानो भवति । अतः सर्वथा सर्वैः सत्सङ्गतिः कर्तव्या । सत्सङ्गतिः मनुष्याय सर्वमभीष्टं ददाति । भर्तृहरिणा, सत्सङ्गतेर्महिमा अस्यां सूक्तौ सुष्ठु वर्णितः—

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥

३०

# परोपकारः

परोपकारशब्दस्य अर्थः परेषाम् अन्येषां जनानाम् उपकारः इति अस्ति। यानि कार्याणि मनुष्यः अन्यप्राणिनां हिताय, लाभाय, सुखाय वा करोति तानि सर्वाणि परोपकारशब्देन उच्यन्ते। "परोपकारैकधियो हि साधवः" इत्युक्तिः प्रसिद्धा अस्ति। ये जनाः समाजे केवलं स्वार्थं साधयन्ति अन्यस्य कस्यापि साहाय्यं न कुर्वन्ति ते पशवः एव। वस्तुतः मनुष्यः सः एव यस्य मनसि दया स्यात्, यः दुःखिनं क्षुधार्तं वा जनं दृष्ट्वा दुःखी भवति तस्य दुखं क्षुधां च अपनेतुं प्रयतते। संसारे अस्माभिः एवंविधानि उदाहरणानि लभ्यन्ते यत्र जनाः परोपकारार्थं प्राणानपि अत्यजन्। परमकारुणिकस्य शिवेः नाम को न जानाति ? श्येनात् कपोतस्य रक्षणार्थं तेन राज्ञा स्वयमेव स्वमांसम् उत्कृत्य दत्तम्, अन्ते च तेन पूर्णशरीरमेव दत्तम्। देवेषु उपकारं कुर्वता दधीचिना वज्रनिर्माणाय स्वास्थीनि सहर्षं दत्तानि। ऋषीणां यज्ञरक्षार्थं दशरथेन प्रियपुत्रौ रामलक्ष्मणौ विश्वामित्रेण सह वनं प्रेषितौ। आधुनिके युगे स्वदेशवासिनां कष्टानि दृष्ट्वा तान् तेभ्यः कष्टेभ्यो मोचयितुम्

अनेकानि कष्टानि सोढ्वा महात्मा गान्धिः देशं स्वतन्त्रम्-कारयत्। ये परोपकारं न कुर्वन्ति ते पापमेव लभन्ते, अत एव वेदे उच्यते-केवलाघो भवति केवलादी इति। तथैव गीतायां कथ्यते-भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् इति। वयं सर्वत्र प्रकृतावपि परोपकारनियममेव पश्यामः। सूर्यचन्द्रनदी-वृक्षादीनां कार्याणि न तु स्वार्थम् अपितु परोपकारार्थं भवन्ति। अतएव केनचित् कविना उक्तम्—

परोपकाराय वहन्ति नद्यः
परोपकाराय फलन्ति वृक्षाः।
परोपकाराय दुहन्ति गावः
परोपकारार्थमिदं शरीरम्॥

अतः सर्वस्मिन् संसारे सर्वैरेव महापुरुषैः परोपकारस्य महिमा स्वीक्रियते। परोपकारं विना मनुष्यस्य जीवनं सुखपूर्णं शान्तिपूर्णं च न भवति। करुणा तु मनुष्यस्य स्वाभाविकी प्रवृत्तिः। सा तं परोपकाराय प्रेरयति।




३१

# हितं मनोहारि च दुर्लभं वचः

भारवेः किरातार्जुनीयाद् उद्धृतमेतद् आभाणकं शतशः सत्यमेव। वयं लोके सर्वत्र एतदेव पश्यामः। यदि गुरोः पितुर्वा वचनं बालकाय कटु भवति तर्हि तद् हितकरमपि भवति। बालः इतस्ततः भ्रमणे दुर्जनसंगतौ वा समयं नाशयति, तदा गुरुः पिता वा तं वारयति अध्येतुं च प्रेरयति। तस्मिन् काले बालः विचारयति कथमयं मम सुखं बाधते, न मां प्रसन्नं द्रष्टुमिच्छति इति। परन्तु पश्चात् तेनैव अनुभूयते यत् तयोः वचनेनैव तेन साफल्यं प्राप्तं, तदा च हितकरं तत् कटु वचनमपि इति तस्य निश्चयो भवति। तस्यैव बालस्य कश्चित् दुर्जनः सखा ब्रूते, 'एहि क्रीडावः, चलचित्रं पश्यावः, परीक्षाया बहूनि दिनानि अवशिष्टानि, अयं समयः पुनर्न प्राप्यते' इति। तत् श्रुत्वा सः प्रसन्नः भवति, तस्य मनसि महानानन्दो जायते, स च तेन सह समयं नाशयति, अन्ते च असफलो भूत्वा चिन्तयति, अहो अहितं तस्य मधुरमपि वचनम्। तथैव वैद्यस्यापि वचनम् 'एतद् भक्ष्यम् एतन्न भक्ष्यम्' इत्यतेत् कटु प्रतिभाति, परन्तु तदेव हितकरम् आरोग्यस्वास्थ्यप्रदं च भवतीति वयं सम्यक् जानीमः। परन्तु

कस्मिन्नपि वचसि वयं माधुर्यं हितं च उभयमपि प्राप्नुयाम इति दुष्करमेतत् । यदि कश्चिद् मन्त्री सर्वदा राजानं प्रशंसति, न च कथयति तस्य दोषान्, तदा स राजा दोषानभिज्ञः प्रजायाः कोपभाजनं भवति । अपरः पुनः मन्त्री यथावसरं राजानं शत्रुभयात् प्रजोपद्रवभयाद्वा सचेतसं करोति, कटु अपि निन्दाकरमपि वचनं ब्रूते, तदा तद्वचनं राज्ञे हितकरं भवति । चाटुकारितापूर्णं वचनं मधुरमापतति कर्णयोः, परन्तु तद्वचनं कदापि हितावहं न भवति । यथा कश्चिदुन्मत्तः सेनापतिः चारणैः स्वशौर्यस्तुतिं श्रुत्वा प्रमत्तो भवेत् तदैव च कश्चित् शत्रुरागत्य तस्मिन् प्रहरेत्, तदा किञ्चिदपि प्रतिकर्तुमसमर्थस्य तस्य सा शौर्यगाथा मधुरापि अहितमेव करोति न तु हितम् । तथैव च स्तुतिवचनमदोद्धतः अफजलखानः शिवाजिमहाराजेन पञ्चत्वं प्रापितः । अतएव साधूक्तं कविवरेण भारविणा—

हितं मनोहारि च दुर्लभं वचः इति ।



## ३२

# शठे शाठ्यं समाचरेत्

अस्मिन् संसारे तस्यैव जनस्य जीवनं वरं यः सम्मानपूर्वकं जीवति। अन्यैः तिरस्कृताः सर्वविधान् अत्याचारान् सहमानाश्च पशवोऽपि जीवन्ति। परन्तु पशुषु अपि सिंहः कस्यचिद् वशे न तिष्ठति। तथैव स्वाभिमानिनां वीराणाम् अयं स्वभावः यत् ते सर्वैः सह मृदु भाषन्ते, सर्वेषु दयामयम् व्यवहारम् आचरन्ति, परन्तु यदि कश्चित् तान् प्रति दुष्टतां प्रदर्शयति तदा ते अवश्यमेव तस्य प्रतीकारं कुर्वन्ति। वयं पश्यामः यत् यदि समाजे कश्चित् एकदा शठस्य अपमानम् अन्यायम् वा सहते तदा सः शठः सर्वदा एव तस्य शिरः आरुह्य तम् पीडयति क्लेशयति च, तस्य जीवनमपि दुष्करम् भवति। समाजे तस्य सम्मानःसमाप्तिम् गच्छति। अतएव वेदेषु अपि ईश्वरः दुष्टान् दण्डयितुम् प्रार्थ्यते यथा "योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तम् वो जम्भे दध्मः इति।" दुष्टेन सह सरलव्यवहारेण जनः सुखी न भवति। अतएव उच्यते—"आर्जवं हि कुटिलेषु न नीतिः" इति। पाण्डवैः दुर्योधनादीनाम् कौरवाणाम् दुष्टता बहुकालम् सोढा। परन्तु तेषां सहनेन दुर्योधनः दुष्टतामार्गात् न अपावर्तत। अन्ततोगत्वा

यदा पाण्डवैः युद्धम् कृतम् केवलं तदैव ते विजयिनः सुखिनश्च अभवन्। तथैव भारते आङ्ग्लशासकैः भारतीयान् दुर्बलान् मत्वा नैकविधानि कष्टानि दत्तानि। परन्तु अन्ते सुभाष-भक्तसिंहचन्द्रशेखरप्रमुखाणां क्रान्तिपूर्णम् आन्दोलनं गान्धि-महात्मनो ऽसहयोगान्दोलनं च दृष्ट्वा तैः आङ्ग्लशासकैः अनुभूतम् यत् साम्प्रतम् अस्माकं स्थितिः अत्र दुष्करा एव। अतस्ते शठाः शठतापूर्णव्यवहारेणैव भारतदेशशासनं परित्यज्य गताः। तथैव वयं पश्यामः यत् चीनपाकिस्तानादिभिः देशैः अपि कृते दुष्टव्यवहारे तान् प्रति दुष्टता एव समीचीना आसीत्। वस्तुतः यादृशो व्यवहारः अन्येन जनेन क्रियते तादृशः एव अस्माभिः कर्तव्यः। अतएव साधूक्तं महाभारते महर्षिणा व्यासेन—

यस्मिन् यथा वर्त्तते यो मनुष्यः
तस्मिन् तथा वर्त्तितव्यम् स धर्मः।
मायाचारो मायया बाधितव्यः
साध्वाचारः साधुना प्रत्युपेयः॥




३३

# जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

एतद् आभाणकम् कस्यापि कवेः रामकथायाः उद्धृतम्। रावणं पराजित्य लक्ष्मणस्य अयम् प्रस्तावः यद् रामः लंकाधिपतिः भवतु यतः लंकायाः वैभवम् अतुलितम् अस्ति। परन्तु रामः प्रस्तावं नाङ्गीकरोति, कथयति च—

अपि स्वर्णमयी लंका न मे लक्ष्मण रोचते।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी॥

कीदृशोऽत्र देशप्रेमा प्रकटितः! कोऽपि सहृदयो जनः एवमेव अनुभवति। तस्य पार्श्वे यदि स्वर्गसुखमपि स्यात् तदा सः जननीम् जन्मभूमिं च न विस्मरति।

सर्वप्रथममं जन्मदात्रीम् मातरम् एव पश्यन्तु। सा हि माता असंख्यानि कष्टानि सोढ्वा नव मासान् यावत् शिशुम् उदरे बिभर्ति। जन्मानन्तरम् च शिशुः मातुः अमृततुल्यम् दुग्धं पीत्वा वर्धते। बाल्ये विद्यालयात् प्राक् माता एव स्नेहपूर्वकं स्वबालम् चलनम् भाषणम् शिष्टाचारम् च शिक्षयति। सा हि बालस्य आद्यगुरुः वर्त्तते। स्वल्पमपि कष्टं यदि बाले आपतति तदा सा चिन्तिता भवति। सकलां रात्रिम् जागर्ति। केवलं तदैव सा

सुखिनी भवति यदा बालः कष्टमुक्तः स्यात्। जननी एव संसारे एका हितैषिणी। तस्याः उपकारान् कोऽपि विस्मर्तुं न शक्नोति।

तथैव जन्मभूमिरपि तत्र निवसतो जनान् स्वकीयेन जलेन, ओषधीवनस्पतिभिश्च शिशून् इव पालयति पोषयति च। तस्याः कोमलशाद्वलमये प्राङ्गणे एव क्रीडन्तो जनाः सानन्दम् वर्धन्ते बलिष्ठाश्च भवन्ति। तस्याम् भूमौ निवसताम् सताम् सङ्गत्या जनाः विशिष्टाचारान् शिक्षन्ते। बाल्यावस्थायाः, किशोरावस्थायाश्च मधुरस्मृतयः तया एव भूम्या सम्बद्धाः भवन्ति। यत् स्वगृहे इव सुखम् जन्मभूमौ प्राप्यते, तदन्यत्र दुर्लभम् एव। अतः एतत् स्वभाविकम् यत् अत्यन्तवैभवपूर्णे स्थानेऽपि अथवा स्वर्गेऽपि तादृशं सुखम् न प्राप्यते यादृशम् अभावग्रस्तेऽपि, दरिद्रेऽपि स्वदेशे प्राप्यते। तत्र हि किञ्चित् आत्मीयत्वं वर्त्तते। तत्रत्यं वातावरणम् बलात् एव जनान् आकर्षति, अतएव विदेशम् गत्वा जनः अवश्यमेव स्वजन्मभूमेः स्मरति। जनेभ्यः केवलं तत्र निवासः एव न रोचते अपितु ते स्वजन्मभूमिं प्राणपणेनापि शत्रोः रक्षन्ति। रामस्य यत् सुखम् अयोध्यायाम् आसीत् तत् तु स्वर्गेऽपि दुर्लभम्। अतएव सत्यमुच्यते—

'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति।

□□□

...ी फिल्में
...ती रही।
...ता और
...ास होने
...वादों के
...र उनका
...ी बढ़ती
...जिसकी

'आखिरी रास्ता' के बाद सभी फिल्मों के पिट जाने से आप कैसा महसूस कर रहे हैं? इनकी फिल्मों की असफलता का जिम्मेदार कौन है?

इन सवालों के जवाब में अमिताभ का कहना है "सुपरस्टार नहीं खत्म हो रहा लेकिन उसको करिश्मे का क्षय हो रहा है।"

सुपर स्टार ने यह भी कहा है कि फिल्म की

...ों में रचा
कलाकार

नौकरी, फिल्मी दुनिया में प्रवेश, संघर्ष, जया भादुड़ी से मिलना और जीवन संगिनी बनना, गांधी परिवार से मित्रता, अपने बच्चों की शिक्षा,

जवाब विस्तार से देते हैं उन्हें इस बहुचर्चित विवाद के बारे पूरी ए टू जेड जानकारी है जैसे कि वी.पी. सिंह, जयपाल रेड्डी ने संसद में कब

आपके साम...
इन साथ...
का पहली ब...

